श्रीः

# नैषधीयचरितप्रस्तावना ।

गोपालसेवासततानुरक्तश्रीमाधवाधीशसुदृष्टिहृष्टे ।
लक्ष्मीसमुल्लासितकान्तिचन्द्रामात्यप्रसादेन निरन्धकारे ॥
दुण्ढारदेशे जयपत्तनेऽस्मिन्नधीतिना संस्कृतशास्त्रसार्थे ।
दाधीचविद्वच्छिवदत्तनाम्ना प्रयत्यते शोधनभूमिकार्थम् ॥

धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयसंपत्तिर्हि शब्दार्थज्ञानाधीनेति निर्विवादम् । शब्दार्थज्ञानं हि शक्तिग्रहाधीनम् । शक्तिग्रहश्च—

'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥'

इत्यभियुक्तोक्त्या व्यवहारत एव निर्दोषप्रयोगहेतुर्भवति । व्यवहारज्ञानं च—

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यःपरनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥'

इत्यभियुक्तोक्त्या कालिदासादीनामिव यशोजनकात्, श्रीहर्षादितो बाणादीनामिवार्थप्रापकात्, मयूरादीनां सूर्यस्तुत्यादिनानर्थवारकात्, सद्यः परमानन्दजनकात्, कान्तासंमिततया स्नेहप्रधानोपदेशजनकात् काव्यादेव भवति ।

काव्येषु च महामहोपाध्यायपण्डितदुर्गाप्रसादशर्मप्रकाशितकाव्यमालामुद्रणतः प्राक्काले प्रायः काव्यपञ्चकमेव काव्यजिज्ञासुभिरधीयते स्म, संप्रति चाधीयते ।

१ श्रीमन्महाराजाधिराजश्री १०८ युतसवाईमाधवसिंहजी ( G.C.S.I. ) शर्मणां सौम्यदृष्ट्या हर्षिते । एतेनैतदीयराज्ये सर्वासां प्रजानां राजभयमन्तरेणैव स्वस्वधर्मनिष्ठत्वध्वननेन राज्ञः कोपस्यानावश्यकत्वं ध्वनितम् ॥ २ बाबूसाहिवश्रीयुतरावबहादूरकान्तिचन्द्रमुकरजी ( C.I.E. ) शर्मणां प्रसन्नतयैव, नत्वधिकारिणां भयेनेन ॥ ३ उत्कोचादिजन्यान्यायरूपान्धकारशून्ये ॥ ४ केवलकोषस्यैव शक्तिग्राहकत्वे पुंलिङ्गदैवतशब्दप्रयोगस्य केवलव्याकरणस्यैव शक्तिग्राहकत्वे बहुवचनपरस्मैपदान्तस्यापि वा वद्धातोः प्रयोगस्यापत्तिः ॥ ५ तथाहि सुभाषितावलीभूमिकायां १३८ पृष्ठे डाक्टरपिटरसन—महामहोपाध्यायदुर्गाप्रसादशर्मभ्यामुपदर्शितः सारसमुच्चयाख्यकाव्यप्रकाशव्याख्यीयश्लोकः—

"हेम्नो भारशतानि वा मदमुचां वृन्दानि वा दन्तिनां
श्रीहर्षेण समर्पितानि कवये बाणाय कुत्राद्य तत् ।
या बाणेन तु तस्य सूक्तिनिकरैरुट्टङ्किताः कीर्तय-
स्ताः कल्पप्रलयेऽपि यान्ति न मनाग् मन्ये परिम्लानताम् ॥" इति ॥

६ एतेन प्रभुसंमितस्य वेदादेः, सुहृत्संमितस्य पुराणेतिहासादेर्व्यावृत्तिः ॥ ७ रघुवंश—किरातार्जुनीय—कुमारसंभव—शिशुपालवध—नैषधीयचरितनामकम् ॥

तत्र नव्यकल्पनादिगुणवत्तया **श्रीहर्षविरचितं नैषधीयचरितमेव** परां कोटिमारोहतीति सर्वसंमतम् ।

स **श्रीहर्षकविः श्रीहीरपण्डितान्मामल्लदेव्यां** समजनीति प्रतिसर्गसमाप्तिश्लोकतः काव्यकुब्जेश्वरजयंतचन्द्राश्रित आसीदिति "ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्" इत्येतद्ग्रन्थसमाप्तौ प्रशस्तिश्लोकतः, "पूर्वस्यां वाराणस्यां पुरि **गोविन्दचन्द्रो** नाम राजा ५७० अन्तःपुरीययौवनरसपरिमलग्राही । तत्पुत्रो [**विजयचन्द्रः** । तत्पुत्रो] **जयन्तचन्द्रः** । तस्मै राज्यं दत्त्वा पिता योगं प्रपद्य परलोकमसाधयत् । **जयन्तचन्द्रः** सप्तयोजनशतमानां पृथिवीं जिगाय । **मेघचन्द्रः** कुमारस्तस्य । यः सिंहनादेन सिंहानपि भङ्क्ष्यमलम् । किं पुनर्मदान्धगन्धेभघटाः । तस्य राज्ञश्चलतः सैन्यं गङ्गायमुने विना नाम्भसा तृप्यतीति नदीद्वययष्टिग्रहणात् 'पङ्गुलो राजा' इति लोके श्रूयते । यस्य **गोमती** दासी षष्टिसहस्रेषु वाहेषु प्रक्षरां (पर्याणं ?) निवेश्याभिषेणयन्ती परचक्रं त्रासयति । राज्ञः श्रम एव कः । तस्य राज्ञो बहवो विद्वांसः । तत्रैको **हीर**नामा विप्रः । तस्य नन्दनः प्राज्ञचक्रवर्ती **श्रीहर्षः** । सोऽद्यापि बालावस्थः । सभायां राजकीयेनैकेन पण्डितेन वादिना हीरो राजसमक्षं जित्वा मुद्रितवदनः कृतः । लब्ध्वा(ज्जा)पङ्के मग्नो वैरं बभार ।

धारालं (?) मृत्युकाले श्रीहर्षं स बभाषे—'वत्सामुकेन पण्डितेनाऽहमाहत्य राजदृष्टौ जितः । तन्मे दुःखम् । यदि सत्पुत्रोऽसि, तदा तं जयेः क्ष्मापसदसि' । श्रीहर्षेणोक्तम् ओमिति । हीरो द्यां गतः । **श्रीहर्षस्तु** कुटुम्बभारमाप्तदायादेष्वारोप्य विदेशं गत्वा विविधाचार्यपार्श्वेऽचिरात्तर्कालंकारगीतगणितज्योतिषचूडामणिमन्त्रव्याकरणादीः सर्वा विद्याः सुस्फुराः प्रजग्राह । गङ्गातीरे सुगुरुदत्तं चिन्तामणिमन्त्रं वर्षप्रमाणं साधयामास । प्रत्यक्षा त्रिपुराऽभूत् । अमोघादेशत्वादिवराप्तिः । तदादि राजगोष्ठीषु भ्रमति । अलौकिकोल्लेखशेखरितं जल्पं करोति यं कोऽपि न बुध्यते । ततोऽतिविद्ययापि लोकागोचरभूतया खिन्नः पुनर्भारतीं प्रत्यक्षीकृत्याऽभणत्—'मातः, अतिप्रज्ञापि दोषाय त(मे)जाता । बुध्यमानवचनं मां कुरु' । देव्योक्तं—'तर्हि मध्यमरात्रेऽम्भःक्लिन्ने शिरसि दधि पिबे । पश्चात्स्वपिहि । कफांशावताराज्जडतालेश-

१ तथाचोक्तमनेनैवाष्टमसर्गसमाप्तौ 'कविकुलादृष्टाध्वपान्थे महाकाव्ये' इति, एकादशसमाप्तौ—'शृङ्गारामृतशीतगौ' इति, त्रयोदशसमाप्तौ—'स्वादूत्पादभृति' इति, एकोनविंशसमाप्तौ—'एकामत्यजतो नवार्थघटनाम्' इति ॥ २ कान्यकुब्जेश्वरत्वेऽपि काश्यादितीर्थाधिपतित्वमपि तदीयदानपत्रतः प्रतीयत इति न विरोधः ॥ ३ दर्शयिष्यमाणप्राचीनदानपत्रानुसारेण वर्धितम् ॥ ४ तथा चोक्तं दशमसर्गसमाप्तौ—'तर्केष्वसमश्रमस्य' इति ॥ ५ तथा चोक्तं स्वयमपि प्रथमसर्गसमाप्तिश्लोके—"तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महाकाव्ये चारुणि, नैषधीयचरिते सर्गोऽयमादिर्गतः' इति ॥

मामुहि' । तथैव कृतम । बोध्यकागादीत । खण्डनादिग्रन्थान्परश्शतार्थग्रन्थ । कृतकृत्यीभूय काशीमयासीत् । नगरतटे स्थितो जयन्तचन्द्रमजिज्ञपत् 'अहमधीत्य समागतोऽस्मि' । राजापि गुणस्नेहलो हीरजेतृपण्डितेन सह सचातुर्वर्ण्यः पुरीपरिसरमसरत् । श्रीहर्षो नमस्कृतः । तेनापि यथार्हमुचितं लोकाय कृतम् । राजानं त्वेवं तुष्टाव—

'गोविन्दनन्दनतया च वपुःश्रिया च मास्मिन्नृपे कुरुत कामधियं तरुण्यः ।

अस्त्रीकरोति जगतां विजये स्मरः स्त्रीरस्त्री जनः पुनरनेन विधीयते स्त्री ॥'

व्याचख्यौ च तारस्वरं सरसविस्तरम् । तुष्टा सभा राजा च । पितृवैरिणं तु वादिनं दृष्ट्वा सकटाक्षमाचचक्षे—

'साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा मयि संविधातरि समं लीलायते भारती ।
शय्या वास्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता
भूमिर्वा हृदयंगमो यदि पतिस्तुल्या रतिर्योषिताम् ॥'

एतच्छ्रुत्वा स वादी प्राह—'देव ! वादीन्द्र ! भारतीसिद्ध ! तव समः कोऽपि न किं पुनरधिकः

'हिंस्राः सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्यता-
स्तस्यैकस्य पुनः स्तुवीमहि महः सिंहस्य विश्वोत्तरम् ।
केलिः कोलकुलैर्मदो मदकलैः कोलाहलं नाहलैः
संहर्षो महिषैश्च यस्य मुमुचे स हुंकृते हुंकृते ॥'

इदं श्रुत्वा श्रीहर्षो निष्क्रोध इवासीत् । भूपेनोक्तं—अत्र श्रीहर्षे इदमेव वक्तुमर्हं प्रतिवादिनाम् । कोऽर्थः । सम्यगवसरमज्ञासीः श्रीहीरवैरिच्छित्यर्थः ॥ अन्योन्यं गाढालिङ्गनमचीकरत् । द्वयोपि (?) वसुधासुधांशुर्विस्तरेण (?) सौधमानीय माङ्गलिकानि कारयित्वा गृहं प्रति प्रहितः । लक्षसंख्यानि हेमानि ददिरे । निश्चिन्तीकृत्यैकदा नृपेणोक्तः कवीशः—'वादीन्द्र ! किंचित्प्रबन्धरत्नं कुरु' । ततो नैषधं महाकाव्यं बद्धं दिव्यरसं महागूढव्यङ्ग्यभारसारं राज्ञे दर्शितम् । राज्ञोचे—'सुष्ठुतममिदम् । केवलं कश्मीरान् व्रज, तत्रत्यपण्डितेभ्यो दर्शय, भारतीहस्ते च मुञ्च, भारती च तत्र पीठे स्वयं साक्षाद्वसति, असत्यं प्रबन्धं हस्ते न्यस्तमवकरनिकरमिव दूरे

१ तथाचोक्तमनेनैव नैषधीयचरितस्य चतुर्थसर्गसमाप्तौ—'स्थैर्यविचारणप्रकरणभ्रातरि' इति, पञ्चमसर्गसमाप्तौ—'श्रीविजयप्रशस्तिरचनातातस्य' इति, षष्ठसर्गसमाप्तौ—'षष्ठः खण्डनखण्डतोऽपि सहजात्' इति, सप्तमसर्गसमाप्तौ—'गौडोर्वीशकुलप्रशस्तिभणितिभ्रातरि' इति, नवमसर्गसमाप्तौ—'संदृब्धार्णववर्णनस्य' इति, सप्तदशसमाप्तौ—'स्वसुः सुसदृशि च्छिन्दप्रशस्तेः' इति, अष्टादशसमाप्तौ—'शिवश(भ)क्तिसिद्धिभगिनीसौभ्रात्रभव्ये' इति, द्वाविंशसमाप्तौ—'नव(नृप)साहसाङ्कचरिते चम्पूकृतो' इति ॥ २ व्यतिरेकहेतुः—"स्मरः कामः स्त्रीनारास्त्रीकरोति । अनेन राज्ञा शस्त्रधारी संमुखागतोऽस्तीति भाषीक्रियते ॥

क्षिपति, सार्ध तु मूर्धधूननपूर्वं सुदूरीकरोति । उपरितः पुष्पाणि पतन्ति' । श्रीहर्षो राजदत्तसर्गनिष्पन्नविपुलग्रामश्रीकः काश्मीरानगमत्, तत्रत्यपण्डितेभ्योऽदर्शयत् । स्वकीयं पुस्तकं सरस्वतीहस्ते न्यास्थत् । सरस्वत्या दूरे क्षिप्तं तत् । श्रीहर्षेणोक्तं—'किं अर्ताले विकल्पासि यन्मदुक्तमपि प्रबन्धमितरप्रबन्धमिवावमन्यसे' । भारत्याह—'भोः परमर्मभाषक, न स्मरसि—यदत्रोक्तं त्वयैकादशे सर्गे चतुःषष्टितमे काव्ये—

'देवी पवित्रितचतुर्भुजवामभागा वागालपत्पुनरिमां गरिमाभिरामाम् ।
एतस्य निष्कृपकृपाणसनाथपाणेः पाणिग्रहादनुगृहाण गणं गुणानाम् ॥'

एवं मां विष्णुपत्नीत्वेन प्रकाश्य लोके रूढं कन्यात्वं लुप्तवानसि । ततो मया पुस्तकं क्षिप्तम् ।

'या (पा)वको वञ्चको व्याधिः पञ्चत्वं मर्मभाषकः ।
योगिनामप्यमी पञ्च प्रायेणोद्वेगकारकाः ॥' इति ।

वाग्देवीवाचं श्रुत्वा श्रीहर्षो वदति—'किमर्थमेकस्मिन्नवतारे नारायणं पतिं चकृषी त्वं, पुराणेष्वपि विष्णुपत्नीति पठ्यसे, ततः सत्ये किमिति कुप्यसि । कुपितैः किं लुप्यते कलङ्कात्' इति । स्वयं गृहीत्वा पुस्तकं हस्ते धारितम् । ग्रन्थश्च श्लाघितः सभासमक्षम् । श्रीहर्षेण पण्डिता उक्तास्तत्रत्याः—'ग्रन्थमत्रत्याय राज्ञे माधवदेवनाम्ने दर्शयत, श्रीजयन्तचन्द्राय च 'शुद्धोऽयं ग्रन्थः' इति लेखं प्रदत्त' इति । भारत्यभिमते ज्ञातेऽपि ते न लेखं ददते, न भूपं दर्शयन्ति । स्थितः श्रीहर्षो बहून्मासान् । जग्धं पाथेयम् । विक्रीतं वृषभादि । मितीभूतः परिच्छदः । एकदा नद्यासन्नदेशे कूपतटासन्नदेशे देवकुले रुद्रजपं रहः करोति । तत्रागते कयोश्चिद्गृहिणोरुल्लुण्ठे (?) चेट्यौ जलप्रथमपश्चाद्ग्रहणघटभरणविषये वादे लग्ने तयोश्चिरमुक्तिप्रत्युक्तिरभूत् । शीर्षाणि स्फुटितानि घातप्रतिघातैः । गते राजकुलम् । राजा साक्षिणं गवेषयति ।

उक्ते ते—अत्र कलहे कोऽपि साक्षी विद्यते न वा ? । ताभ्यां जगदे—'विप्रस्त्वेक आस्ते जपतत्परः' । गता राजकीयाः । आनीतः श्रीहर्षः । पृष्टस्तयोर्नयानयौ । श्रीहर्षेण गीर्वाणवाण्योक्तं—'देव, वैदेशिकोऽहं न वेद्मि, किमप्येते प्राकृतवादिन्यौ ब्रूतः । केवलं ताञ्छब्दान् वेद्मि' । राज्ञोक्तम्—(तर्हि तानेव वद) । तत्क्रमस्थमेव तद्भाषितप्रतिभाषितशतमभिहितमनेन । राजा चमत्कृतः । अहो प्रज्ञा । अहो अवधारणा । दास्योर्वादं निर्णीय यथासंभवं निग्रहानुग्रहौ कृत्वा प्रहित्य श्रीहर्षमपृच्छद्राजा—'कस्त्वमंधि शिरोमणिः' । श्रीहर्षेणोक्तं सर्वं कथानकम् । राजन्, पण्डितकृतदौर्जन्यात्तव पुरे दुःखी तिष्ठामि । सम्यक् पारम्पर्योज्ञा (?) । राजा पण्डितानाहूय अवादीत्—'धिक् मूढाः, ईदृशे रत्ने न मिलथ ।

१ नारायणोपलब्धपुस्तकेषु "कल्लोलजाल"-(४१) "स्वद्रूपसंपद"-(४२) श्लोकावधिको वर्तेते । अत एतत्पुस्तके 'चतुःषष्टितमे' इति बोध्यम् ॥

वरं प्रज्वलिते वह्नावह्वायानेहितं (?) वपुः ।
न पुनर्गुणसंपन्ने कृतः स्वल्पोऽपि मत्सरः ॥
वरं सा निर्गुणावस्था यस्यां कोऽपि न मत्सरी ।
गुणयोगे तु वैमुख्यं प्रायः सुमनसामपि ॥

तस्मात् खला यूयं गच्छत । एवं( नं ) महात्मानं प्रत्येकं स्वगृहेषु सत्कुरुत'। तदा श्रीहर्षोऽपि प्रागवत्—

'यथा यूनस्तद्वत्परमरमणीयापि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते ।
मदुक्तिश्चेतश्चेन्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषाराधनरसैः ॥'

इति । ललम्ब्रि(क्षि)रे पण्डिताः सर्वे । गृहं नीत्वा सत्कृत्यानुनीय राज्ञा च सत्कार्य तैः प्रेहितः श्रीहर्षः काशीम् । मिलितो जयन्तचन्द्राय । उक्तं सर्वम् । तुष्टः सः । प्रसृतं नैषधं लोके ॥

अत्रान्तरे **जयन्तचन्द्रस्य पद्माकर**नामा प्रधानवरः श्री**अणहिल्लपुरं** गतः । तत्र सरस्तटे रजकख्या(क्षा)लितायां शाटिकायां नर्तुकायां (?) केतक्यामिव मधुकरकुलं निलीयमानं दृष्ट्वा विस्मितोऽप्राक्षीद्रजकम्—'यस्या युवतेरियं शाटी तां मे दर्शय । तस्य हि मन्त्रिणस्तत्पद्मिनीत्वे निर्णयस्थं मनः । रजकेन सायं तस्मै तद्गृहं नीत्वा तामर्पयित्वा तत्स्वामिनी **सूहवदेवि**नाम्नी शालपतिपत्नी विधवा यौवनस्था सुरूपा दर्शिता । तां श्री**कुमारपाल**पार्श्वादुपरोध्य तद्गृहान्नीत्वा **सोमनाथयात्रां** कृत्वा काशीं गतस्तां पद्मिनीं **जयन्तचन्द्र**भोगिनीमकरोत् । **सूहवदेवि**रिति ख्यातिमगात् । सा च सगर्वा विदुषीति कृत्वा **कलाभारती**ति पाठयति लोके । श्री**हर्षो**ऽपि **नरभारती**ति पठ्यते । तस्य तन्न सहते सा मत्सरिणी । एकदा ससत्कारमाकारितः श्रीहर्षो भणितश्च 'त्वं कः' । श्रीहर्षः-'कलासर्वज्ञोऽहम्' । राज्याभाणि—'तर्हि उपानहौ परिधापय', को भावः—यद्ययं 'न वेद्मि' इति भणति द्विजत्वात्, तर्हि अज्ञः । श्रीहर्षेणाङ्गीकृतम् । गतो निलयम् । तरुवल्कैर्यथातथा परिकर्मितैः सायं लोलाक्षः सन् दूरस्थः स्वामिनीमाजूहवत्, चर्मकारविधिनोपानहौ पर्यधीधपत् 'अभ्युक्षणं विनिक्षिपध्वं, चर्मकारोऽहम्' इति वदन् । राजानमपि तां कुचेष्टां ज्ञापयित्वा खिन्नो गङ्गातीरे संन्यासमग्रहीत् ।

सा च सूहवदेविः साम्राज्येशा पुत्रमजनयत् । सोऽपि यौवनमाससाद । धीरः परं दुर्नयमयः ।

तस्य च राज्ञो **विद्याधरो** मन्त्री । स च चिन्तामणिविनायकप्रसादात्सर्वधातुहेमत्वकरणप्रख्यातमाहात्म्यस्पर्शपाषाणलाभात् ८८०० विप्राणां भोजनदातेति लघु-

१ तथाचोक्तं सप्तदशसर्गसमाप्तौ—"काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिर्महाकाव्ये" इति ॥

युधिष्ठिरतया ख्यातः कुशाग्रीयप्रज्ञः । राजा तं जगाद—'राज्यं कस्मै कुमाराय ददामि' । मन्त्र्याह—'मेघचन्द्राय सुवंशाय देहि । न पुनर्धूर्तापुत्राय' । राजा तु तया कार्मणितस्तत्पुत्रायैव दित्सते । एवं विरोध उत्पन्नो मन्त्रिराज्ञोः । कथं कथंचिन्मन्त्रिणा राज्ञीवाचमप्रमाणीकार्य भूपो मेघचन्द्रराज्यदानमङ्गीकारितः । राज्ञी क्रुद्धा धनाढ्यतया स्वच्छन्दतया निजप्रधाननरान् प्रेष्य तक्षशिलाधिपतिः सुरत्राणः काशीभञ्जनाय प्रयाणे प्रयाणे सपादलक्षहेमदानोक्त(ख्य) न वलित आयाति । (तत्तु) विद्याधरेण चरदृशा विदितं राज्ञे कथितम् । राजा तत्कार्मणदृढमूढः प्राह—'ममेयं वल्लभेश्वरी नैवं पतिद्रोहं समाचरति' । मन्त्री तु वदति 'राजन् ! अमुकप्रयाणे तिष्ठति सारवीन्द्रः' । राज्ञा इङ्गितो गतो गृहम् । चिन्तितं च तेन—'नृपस्तावन्मूढः, राज्ञी बलवती लब्धप्रसराऽविवेकिनी, मम मरणं यदि स्वामिमरणादर्वाग्भवेत् तदा धन्यता । प्रातश्चलितो मन्त्री स्वसदनात्पथि गच्छन्तं पिण्याकं दृष्ट्वा तमजिघ्रसिषत्, पुनः पुरोगतः स्फुटितचणकपिटकमालोक्य तदनेन मनोऽदधात् । तेन कुचेष्टाद्वयेनात्मनो विधिवैपरीत्यं निर्णीयोपराजं व्यजिज्ञपत्—'देव, अहं गङ्गाजले मङ्क्त्वा म्रिये यथादिशसि' । राजाख्यत्—'यदि म्रियसे, तदा सुखं जीवामः । कर्णज्वरो निवर्तते' । मन्त्री दूनः—हुं हितवचनानाकर्णनम्, अनये रतिः, प्रियेष्वपि दोषः, निजगुरुजनेष्ववज्ञा, मृत्योः किल पूर्वरूपाणि । आगतं राज्ञो मरणम् । राजानमापृच्छ्य गृहं गत्वा सर्वस्वं द्विजादिलोकाय प्रदाय भवविरक्तो जाह्नवीजलमध्यं प्रविश्य कुलप्रो(पुरो)हितमाह—दानं गृहाण । विप्रेणापि करः प्रसारितः । दत्तः स्पर्शपाषाणः । तेन तु 'धिक् दानं यद्ग्रावाणं दत्से' इति क्रुद्धेनान्तरुदकं चिक्षेप सोऽश्मानं गङ्गादेव्या जले । मन्त्री जले मङ्क्त्वा मृतः । राजाऽनाथो जातः । सुरत्राण आयातः नगरे भाण्डं भाण्डेन स्फुटितम् । राजा युद्धायाभिमुखमगात् । ८४००(?) निस्वानं स्वानं राजा न शृणोति । अपृच्छच्च तटस्थान् । तैर्बभणे—म्लेच्छधनुर्ध्वानेषु मग्नानि ध्वानान्तराणि । राजा हृदयेऽहारयत् । ततो न ज्ञायते किं हतो मृतो वा । यवनैर्लाता पूः इति राजशेखरसूरिणा १३४८ खिस्ताब्दे विरचिते प्रबन्धकोषे श्रीहर्षविद्याधरजयन्तचन्द्रप्रबन्धात्, 'गौडदेशीयः' इति 'श्रीहर्षवंशे हरिहरो गौडदेश्यः' इत्येतदुत्तरहरिहरप्रबन्धतोऽवगम्यते ॥

जयचन्द्रराज्यसमयस्तु—

अकुण्ठोत्कण्ठवैकुण्ठकण्ठपीठलुठत्करः ।
संरम्भः सुरतारम्भे स श्रियः श्रेयसेऽस्तु वः ॥ १ ॥

आसीदशीतद्युतिवंशजातक्ष्मापालमालासु दिवं गतासु ।
साक्षाद्विवस्वानिव भूरिधाम्ना नाम्ना यशोविग्रह इत्युदारः ॥ २ ॥

तत्सुतोऽभून्महीचन्द्रश्चन्द्रधामनिभं निजम् ।
येनापारमकूपारपारे व्यापारितं यशः ॥ ३ ॥

---

१ अत एव स्वामिजनस्वामिवर्णनं कृतवान् । तथा चोक्तवान् स्वयमेव सप्तमसर्गसमाप्तिश्लोके 'गौडोर्वीशकुलप्रशस्तिभणितिभ्रातरि' इति प्रकृतनैषधीयचरितमहाकाव्यविशेषणम् ॥

तस्याभूत्तनयो नयैकरसिकः क्रान्तद्विषन्मण्डलो
विध्वस्तोद्धतवीरयोधतिमिरः श्रीचन्द्रदेवो नृपः ।
येनोदारतरप्रतापशमिताशेषप्रजोपद्रवं
श्रीमद्गाधिपुराधिराज्यमसमं दोर्विक्रमेणार्जितम् ॥ ४ ॥

तीर्थानि काशिकुशिकोत्तरकोशलेन्द्रस्थानीयकानि परिपालयताऽधिगम्य ।
हेमात्मतुल्यमनिशं ददता द्विजेभ्यो येनाङ्किता वसुमती शतशस्तुलाभिः ॥ ५ ॥

तस्यात्मजो मदनपाल इति क्षितीन्द्रचूडामणिर्विजयते निजगोत्रचन्द्रः ।
यस्याभिषेककलशोल्लसितैः पयोभिः प्रक्षालितं कलिरजःपटलं धरित्र्याः ॥ ६ ॥

यस्यासीद्विजयप्रयाणसमये तुङ्गाचलोच्चैश्चल-
न्माद्यत्कुम्भिपदक्रमासमभरभ्रश्यन्महीमण्डले ।
चूडारत्नविभिन्नतालुगलितस्त्यानासृगुद्भासितः
शेषः शेषवशात् (?) दिव क्षणमसौ क्रोडे निलीनाननः ॥ ७ ॥

तस्मादजायत निजायतबाहुवल्लिबन्धावरुद्धनवराज्यगजो नरेन्द्रः ।
सान्द्रामृतद्रवमुचां प्रभवो गवां यो गोविन्दचन्द्र इति चन्द्र इवाम्बुराशेः ॥८॥

न कथमप्यलभन्त रणक्षमांस्तिसृषु दिक्षु गजानथ वज्रिणः ।
ककुभि बभ्रमुरभ्रमुवल्लभप्रतिभटा इव यस्य घटागजाः ॥ ९ ॥

अजनि विजयचन्द्रो नाम तस्मान्नरेन्द्रः सुरपतिरिव भूभृत्पक्षविच्छेददक्षः ।
भुवनदलनहेलाहर्म्यहम्मीरनारीनयनजलदधाराधौतभूलोकतापः ॥ १० ॥

लोकत्रयाक्रमणकेलिविशृङ्खलानि प्रख्यातकीर्तिकविवर्णितवैभवानि ।
यस्य त्रिविक्रमपदक्रमभाञ्जि भान्ति प्रोद्योतयन्ति बलिराजभयं यशांसि ॥ ११ ॥

यस्मिंश्चलत्युदधिनेमिमहीजयार्थं माद्यत्करीन्द्रगुरुभारनिपीडितेव ।
याति प्रजापतिपदं शरणार्थिनी भूस्त्वङ्गत्तुरङ्गनिवहोत्थरजश्छलेन ॥ १२ ॥

तस्मादद्भुतविक्रमादथ जयच्चन्द्राभिधानः पति-
र्भूपानामवतीर्ण एष भुवनोद्धाराय नारायणः ।
द्वैधीभावमपास्य विग्रहरुचिं धिक्कृत्य शान्ताशया
सेवन्ते यमुदग्रबन्धनभयध्वंसार्थिनः पार्थिवाः ॥ १३ ॥

गच्छेन्मूर्च्छामतुच्छां न यदि कवलयेत्कूर्मपृष्ठाभिघात-
प्रत्यावृत्तः श्रमार्तो नमदखिलफणश्वासवात्यासहस्रम् ।
उद्योगे यस्य धावद्धरणिधरधुनीनिर्झरस्फारधार-
भ्रश्यद्दानद्विपालीबहलभरगलद्धैर्यमुद्रः फणीन्द्रः ॥ १४ ॥

सोऽयं समस्तराजचक्रसंसेवितचरणः परमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहे-

---

१ 'अथो कन्यकुब्जं कान्यकुब्जं स्यात् कुब्जमित्यपि । महोदयं गाधिपुरम्' इति केशवः ॥ २ 'काशी वाराणसी काशिर्वरणासी बुराणसी ॥' इति केशवः ॥ ३ अयं च हम्मीरः, कुत्रत्य इति न निश्चयः ॥

श्वरनिजभुजोपार्जितकान्यकुब्जाधिपत्यश्रीचन्द्रदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वरश्रीमदनपालदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वराश्वपतिगजपतिनरपतिराजत्रयाधिपतिविविधविद्याविचारवाचस्पतिश्रीगोविन्दचन्द्रदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वराश्वपतिगजपतिनरपतिराजत्रयाधिपतिविविधविद्याविचारवाचस्पतिश्रीविजयचन्द्रदेवपादानुध्यातपरममहाराजाधिराजपरमेश्वरपरममाहेश्वराश्वपतिगजपतिनरपतिराजत्रयाधिपतिविविधविद्याविचारवाचस्पतिश्रीमज्जयचन्द्रो विजयी असुरेसपत्तलायां केमोलीग्रामनिवासिनो निखिलजनपदानुपगतानपि च राजराज्ञीयुवराजमन्त्रिपुरोहितप्रतिहारसेनापतिभाण्डागारिकाक्षपटलिकभिषग्नैमित्तिकान्तःपुरिकदूतकरितुरगपत्तनाकरस्थानगोकुलाधिकारिपुरुषानाज्ञापयति बोधयत्यादिशति च—विदितमस्तु भवतां—यथोपरिलिखितग्रामः सजलस्थलः सलोहलवणाकरः। समत्स्याकरः सगर्तोषरः सगिरिगहननिधानः समधुकाम्रवनवाटिकाविटपतृणयूतिगोचरपर्यन्तः सोर्ध्वाधश्चतुराघाटविशुद्धः स्वसीमापर्यन्तस्त्रिचत्वारिंशदधिकद्वादशशतसंवत्सरे आषाढे मासि शुक्लपक्षे सप्तम्यां तिथौ रविदिने। अङ्कतोऽपि संवत् १२४३ आषाढशुदि रवौ ७। अद्येह श्रीमद्वाराणस्यां गङ्गायां स्नात्वा विधिवन्मन्त्रदेवमुनिमनुजभूतपितृगणांस्तर्पयित्वा तिमिरपटलपाटनपटुमहसमुष्णरोचिषमुपस्थायौषधिपतिशकलशेखरं समभ्यर्च्य त्रिभुवनत्रातुर्भगवतो वासुदेवस्य पूजां विधाय प्रचुरपायसेन हविषा हविर्भुजं हुत्वा मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धयेऽस्माभिर्गोकर्णकुशलतापूतकरतलोदकपूर्वकं भारद्वाजगोत्राय भारद्वाजाङ्गिरसबार्हस्पत्येतित्रिप्रवराय राउतश्रीआढलेपौत्राय राउतश्रीढुंढापुत्राय डोडराउतश्रीअणंगाय चन्द्रार्कं यावच्छासनीकृत्य प्रदत्तो मत्वा यथादीयमानभोगभोगकरप्रवणिकरप्रभृतिनियतानियतसमस्तदायादाज्ञाविधेयीभूय दास्यथ इति।

भवन्ति चात्र श्लोकाः—

भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति।
उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ॥
शङ्खं भद्रासनं छत्रं वराश्वा वरवारणाः।
भूमिदानस्य चिह्नानि फलमेतत् पुरंदर॥
षष्टिं वर्षसहस्राणि स्वर्गे वसति भूमिदः।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्॥
बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम्।
स विष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति॥
तडागानां सहस्रेण वाजपेयशतेन च।
गवां कोटिप्रदानेन भूमिहर्ता न शुध्यति॥

वारिहीनेष्वरण्येषु शुष्ककोटरवासिनः ।
कृष्णसर्पाश्च जायन्ते देवब्रह्मस्वहारिणः ॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥

वाताभ्रविभ्रममिदं वसुधाधिपत्यमापातमात्रमधुरा विषयोपभोगाः ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां धर्मः सखा परमहो परलोकयाने ॥

यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत ॥

( इण्डियन् आण्टिकेरी १५।११–१२ )

इति प्राचीनलेखमालायां २३ लेखे संवत् १२४३ ( A. D. 1187 ) स्फुट एव लिखितः । २२ लेखे जयचन्द्रयौवराज्यदानपत्रे संवत् १२२५ (A. D. 1169) लिखितः ॥

इत्थं च जयन्तचन्द्रस्य द्वादशख्रिस्तशतके स्थितिनिश्चयान्नैषधीयचरितकर्तुः श्रीहर्षस्यापि तदैव स्थितिर्निश्चिता । अत एव जयन्तचन्द्रपितृविजयचन्द्रवर्णनात्मकमेव 'विजयप्रशस्तिरचनातातस्य' इति पञ्चमसर्गसमाप्तिश्लोके स्वकीयविशेषणध्वनितविजयप्रशस्तिनामकं काव्यं भवेत् ॥

अस्मिंश्च विषये बहूनां विसंवादं प्रदर्श्य तत्खण्डनपूर्विका डाक्टर बूलरसंमतिरपि । तथाहि तदीयं Royal Asiatic Society Bombay Branch इतिनामभूषितविद्वत्सभया १८७५ ख्रिस्ताब्दे प्रकाशिते प्रबोधग्रन्थे (pp. 279–287 ) मुद्रितं व्याख्यानम्—

इतः प्राग् वर्षद्वयं व्यत्यगाद्यदाहम् एशियाटिकसभासदां पुरस्तान्नैषधीयनिर्मातृश्रीहर्षसमयविवेचनसंदर्भपत्रमपाठिषम् । तत्र च राजशेखरकृतं प्रकृतप्रबन्धकोषात् "श्रीहर्षः ख्रिस्तद्वादशशताब्द्यन्तिमभागे बभूव" इति साधयितुं प्रायतिषि । निरमासिषं च तद्विषयकमेकं संदर्भम् ।

ततःप्रभृति बहवो जना विशेषश्चेण्डियन् आण्टिकेरी (Indian Antiquary) नामकपुस्तके तत्र मदीयनैषधीयसमयविविक्तिपुस्तके स्वमत्या बहून् दोषानुदजीघटन् । परंतु संप्रत्यहमस्मिन् संदर्भे तदुद्घाटितदोषाभासान् वक्ष्यमाणस्वयुक्तिभिरपनेतुं स्वसंमतं च द्रढयितुमाशासे ।

अथ युक्तयः—

स्वनिर्मिते प्रथमे संदर्भे नैषधीयसमयनिश्चायकानि वक्ष्यमाणप्रमाणान्यदीदृशम् ॥

(१) श्रीहर्षो वाराणस्यधिपतिजयन्तचन्द्रसभायाः सभ्योऽभूदिति राजशेखरः ॥

---

१ अग्रे चोपदर्शितप्राचीनलेखो द्रष्टव्यः ॥ २ तत्र इण्डियम् आण्टिकेरीप्रथमपुस्तके १० पृष्ठे विलोकनीयम् ॥

(२) अयं जयन्तचन्द्रो जयचन्द्र एव । यः किल राठौरवंशीयानां कान्यकुब्जाधिपानामन्तिमो वाराणस्यधिपतिबभूव; यं खिस्तस्य पञ्चनवत्युत्तरैकादशशताब्द्यां ११९५ यवना राज्यात् प्रसह्य प्रभ्रंशयांचक्रुः ॥

(३) श्रीहर्षोऽप्यकथयत् 'कान्यकुब्जाधिपतिनाहं सत्कृतोऽभूवम्' इति ॥

(४) राजशेखरोऽपि स्वग्रन्थैकखण्डे प्रसङ्गतोऽवर्णयत्—'नैषधीयस्य प्रथमं पुस्तकं हरिहरो गुजरातेतिख्यातदेशं वीरधवलनामनि राजनि वसुमतीं शासत्यानयत् ।

तत्पुस्तकाच्च वीरधवलप्रधानामात्यो वास्तुपालो नामाऽन्यदेकं पुस्तकमवतारयामास' इति ॥

किंच स्वनिर्मिते प्रथमे संदर्भे 'राजशेखरस्य सर्वं तु प्रमाणजातं विश्वासानर्हम्' इत्यप्यहं स्वीकृतवान् ॥

डॉक्टर फिट्जएडवर्ड हाल ( Fitz-Edward Hall ) पण्डितेन "धाराधिपतिभोजराजकृतसरस्वतीकण्ठाभरणे धृता बहवो नैषधीयश्लोका दृश्यन्ते" इत्यभाणि ।

अहं च 'भोजराजः खिस्तैकादशशताब्द्याः पूर्वार्धेऽभूत्' इत्यपि स्वसंदर्भेऽलेखिषम् ।

किंच यन्महाशयडॉक्टरहालपण्डितेनोक्तम्, तदपि स्वसत्तायां प्रमाणमपेक्षते । यतः 'सरस्वतीकण्ठाभरणे नैषधीयश्लोकाः कदाचित्केनचिदन्येन ग्रन्थकर्तुः पश्चात्प्रक्षिप्यन्ते स्म,—इति संदेह एव' इत्यपि तत्रादर्शयम् ॥

मदीयसंदर्भसंमतमुद्दिश्य वक्ष्यमाणा आक्षेपा जनैः प्रादर्शिषत । ते च यथा—

श्रीमान् काशीनाथत्र्यम्बकसूनुस्तैलङ्गः कुसुमाञ्जलिकर्तुरुदयनाचार्यस्य समयं निरूपयन् प्रसङ्गतः श्रीहर्षस्यापि समयविवेकमन्ववभ्रात् । तत्रादर्शयत्—"श्रीहर्षः खिस्तस्य नवम्यां दशम्यां वा शताब्द्यां बभूव, न तु द्वादश्याम्" इति ॥ अत्र विषये चेमानि प्रमाणान्यदीदृशत् ।

(१) नैषधीयकाव्यस्य श्लोकाः सरस्वतीकण्ठाभरण उदाहृता दृश्यन्त इति ।

(२) खिस्तैकादशशताब्दीसंभूतवाचस्पतिमिश्रेण श्रीहर्षप्रणीतखण्डनखण्डखाद्यस्य खण्डनं कृतम् ।

(३) सायणमाधवः स्वप्रणीतशंकरविजयनामग्रन्थे श्रीहर्षं शंकराचार्यसमकालीनमकथयत् ॥ इति ।

महाशयकाशीनाथतैलङ्गश्चान्त इत्यप्यकथयत्—'राजशेखरस्य कथनं विश्वासानर्हम् । तस्य बहुषु स्थानेषु स्फुटदोषग्रस्तत्वात्' इति ॥

१ तथाचोक्तम्—'ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्' इति ॥ २ इण्डियन् आण्टिक्वेरी ( Ind. Ant. ) प्रथमपुस्तके २९७ पृष्ठे, ३५३ पृष्ठे, द्वितीयपुस्तके ७१ पृष्ठे च विलोकनीयम् ।

किंच महाशयतेलङ्गप्रदर्शितदोषेभ्योऽतिरिक्तं दोषं महाशयो ग्रौस(F. S. Gorwse) पण्डितोऽपि चन्दकविप्रणीत 'पृथिवीराजरासौ' नामकग्रन्थे केनचिल्लेखेन प्रादर्शयत् "चन्दोनाम कविः ख्रिस्तद्वादशशतान्यन्तिमभागेऽभूत्; तद्यदि राजशेखरस्य वचनं तथ्यं स्यात्तर्हि चन्दः श्रीहर्षस्य समयकालीनतया बाढं परिचितः स्यात्। प्रत्युत चन्दः स्वपूर्वजानां वर्णने नलचरितप्रणेतारं श्रीहर्षं कालिदासात् पूर्वं व्यवास्थापयत्" इति ॥

इण्डियन् आण्टिक्वेरी (Ind. Ant.) नामपुस्तके बाबूरामदाससेनेन[1] पूर्णयेन[3] च राजशेखरानुकूलं मम मतमनुमोद्य दृढीकृतम्। महाशयग्रौसस्य च मन्मतप्रतिकूलदोषा युक्तिभिरुपशमिताः। अतोऽहं ताभ्यामनुगृहीतोऽस्मि। परंतु हन्त तयोरपि युक्तयो न मे संमतं यथावद्दृढयितुं शक्नुवन्ति ॥

अथ मम प्रतिकूलाः सर्वे आक्षेपाः समाधीयन्ते।

(१) तत्र प्रथमं यदुक्तं "नैषधीयकाव्यस्य सरस्वतीकण्ठाभरणे श्लोका दृश्यन्ते" इति, तस्य समाधानम्—

अयमाक्षेपस्तु डॉक्टर हालसाहिबेनादौ प्रदर्शितः। परंतु मया सम्यगन्विष्य व्यवेचि "सरस्वतीकण्ठाभरणे नैकोऽपि नैषधीयचरितश्लोको दृश्यते" इति।

गतवर्षे च मया सरस्वतीकण्ठाभरणस्यैकं पुस्तकं रत्नदर्पणनामिका तत्प्रथमपरिच्छेदग्रन्थटीका च वाराणसीतः समानायिते। अस्मिन्नेवान्तरे श्रीमता अळकीकरेण वामनाचार्यशास्त्रिणा सरस्वतीकण्ठाभरणे धृतानां श्लोकानामकारादिक्रमेणानुक्रमणिका समग्रा निरमायि। अथ पुनस्तां नैषधीयपुस्तकस्य प्रतिश्लोकपादं संगमय्य "नैषधीयकाव्यश्लोकच्छायापि सरस्वतीकण्ठाभरणे नास्ति" इति निरधारि।

तस्यास्मिन् निश्चयेन कदाचिद्भ्रान्तिः स्यादिति वक्तुमशक्यं महापरिश्रमेणेत्थंकरणात् ॥

किंच डॉक्टर औफ्रेख्ट् (Dr. Aufrecht) पण्डितेन स्वनिर्मितायां आक्स्फोर्ड (Oxford MSS.) हस्तलिखितपुस्तकानां सूच्यां सरस्वतीकण्ठाभरणे धृतानां श्लोकानां तत्कर्तॄणां चानुक्रमणिका लिखिता, परंतु तत्र नैषधीयनामापि न दृश्यते। अतो डाक्टरहालपण्डितस्य कथनं भ्रान्तिग्रस्तं प्रतीयते। अथवा डाक्टरहालपण्डितेनावलोकितं सरस्वतीकण्ठाभरणपुस्तकमशुद्धं स्यादिति ॥

अथ द्वितीयाक्षेपसमाधानम्—

(२) यच्चोक्तम्—'ख्रिस्तैकादशशताब्यन्तिमभागाविर्भूतवाचस्पतिमिश्रेण श्रीहर्षप्रणीतखण्डनखण्डखाद्यस्य खण्डनं कृतम्। अतः श्रीहर्षो वाचस्पतिमिश्रात् पूर्वोऽभूदिति सुस्पष्टम्' इति। तदेतत्तु सत्यं यत् वाचस्पतिमिश्रेण

१ (Ind. Ant.) पुस्तके द्वितीयखण्डे २१३ पृष्ठे विलोकनीयम् ॥ २ बाबूरामदाससेनव्याख्यानं (Ind. Ant.) पुस्तके तृतीयखण्डे ३१ पृष्ठे विलोक्यम् ॥ ३ पूर्णय-(P. M. Pūrnaiya B. A.) स्य व्याख्यानं (Ind. Ant.) पुस्तकतृतीयखण्डे २९ पृष्ठे विलोक्यम् ॥

**खण्डनोद्धार**नामा ग्रन्थः कृतः । परंतु तत्र नायं निश्चयः स्यात् यत् कतमोऽयं **वाचस्पति**मिश्रः । यतो **वाचस्पतिमिश्रा** बहवोऽभूवन् । यैः खलु धर्मशास्त्राणि दर्शनग्रन्थाश्च निरमायिषत ।

किंचेन्द्रप्रस्थ( **देहली** )नगरनिवासिपण्डित**विश्वेश्वरनवलगोस्वामि**पार्श्वे **खण्डनोद्धार**स्यैकं पुस्तकं वर्तते । अथ यदाहमिन्द्रप्रस्थनगरमगमं तदा स प्रार्थितः कृपया तत् पुस्तकं मामदर्शयत् । तत्र च न किमपि तत् प्रमाणमपश्यं यत् 'खलु **वाचस्पतिमिश्रः** ख्रिस्तैकादशशताब्द्यामभूत्' इति साधयेत् । **खण्डनोद्धार**ग्रन्थश्च प्राचीनवेदान्तिकृतवेदान्तपुस्तकानां सूचीपत्रे नैव दृश्यते । **वाराणसी**महाविद्यालयीयपण्डिता अपि मया खण्डनोद्धारसमयं निश्चेतुं पृष्टाः "अयं खण्डनोद्धारग्रन्थः केनचिन्नवीनवाचस्पतिमिश्रेण व्यरचि, नतु प्राचीनेन"[३] इति मां प्रत्यवोचन् ।

अथ तृतीयाक्षेपसमाधानम्—

(३) यदप्युक्तं "**पृथिवीराजरासौ** नामके ग्रन्थे **चन्द**कविः **श्रीहर्षं कालिदासात्** पूर्वजातममन्यत" इति, तत्रोच्यते—**चन्द**कविः स्वग्रन्थे मङ्गलाचरणपद्यमे श्लोके **श्रीहर्ष**मुद्दिदेश । यं च श्रीमान् **ग्रौसो** यथावदन्ववादीत् ।

किंच **चन्द**कविः मङ्गलाचरणश्लोकेषु 'सर्पराजं **शेषं**, **विष्णुं**, **व्यासं**, **शुकदेवं**, **नलराज**यशःप्रख्यापकं **श्रीहर्षं**, **भोजराज**वृत्तान्तप्रणेतारं **कालिदासं**, **दण्डमालिनं**, **गीतगोविन्द**कर्तारं **जयदेवं** च एतान् प्राचीनप्रसिद्धकवीन् प्रणमामि' इत्यकथयत् । तत्र यत् श्रीमान् **ग्रौसः** परामृशति—"चन्दकविनैते महाकवयो हि तत्तज्जन्मसमयमनुसृत्य मङ्गलाचरणश्लोकेषु पूर्वोत्तरतः सनामोद्देशं स्थापयित्वाऽभिवादिताः" इति । तत्तु "श्रीहर्षः स्वप्रणीतखण्डनखण्डखाद्यग्रन्थे कालिदासप्रणीतग्रन्थसंदर्भान् उदाजहार" इति श्रीहर्षसमयविवेकानुसंधानशीलश्रीमत्काशीनाथतेलङ्गवचनादसंभवमिव प्रतिभाति ।

किंच ख्रिस्तद्वादशशताब्दीसंभूतचन्दकविः श्रीहर्षं प्राचीनकविमिवावर्णयिष्यत्तर्हि राजशेखरस्य संमतमसंभवमभविष्यत् । अथास्मदनुकूलं राजशेखरस्य संमतं वक्ष्यमाणयुक्तिद्वयमेकतरेण निश्चेतुं शक्यम् । तथा हि—

(१) यत् श्रीमता ग्रौसपण्डितेनोक्तं "चन्दप्रणीत**पृथिवीराजरासौ**"—पुस्तके

१ तत्रापि चत्वारस्तु यूरोपमुद्रितग्रन्थग्रन्थकर्तृनामसंग्रह ( Catalogus Catalogorum ) पुस्तक एवोपलभ्यन्ते । मिश्रोपपदरहितास्त्वष्टौ ॥ २ तत्त्वबिन्दु (वेदान्त)—तत्त्वशारदी(योग)तत्त्वसमीक्षा—ब्रह्मसिद्धिटीका—न्यायकणिका(विधिविवेकटीकामीमांसा)—न्यायतत्त्वावलोक—न्यायरत्नटीका—न्यायवार्तिकतात्पर्यटीका—ब्रह्मतत्त्वसंहितोद्दीपिनी—भामती ( शारीरकभाष्यव्याख्या ) युक्तदीपिका (सांख्य)—योगसूत्रभाष्यव्याख्या—वेदान्ततत्त्वकौमुदी—वेदान्तवाचस्पत्य—सांख्यतत्त्वकौमुदीनिर्मात्रा । ३ (Ind. Ant.) तृतीयपुस्तके ८१ पृष्ठे विलोकनीयम् ॥

मङ्गलाचरणश्लोकेषु यः श्रीहर्षस्य प्रथममुद्देशः स श्रीहर्षः कालिदासात् पूर्वोऽभूत्' इति कवेराशयं व्यञ्जयति" इत्यसत्यं स्यात्।

(२) अथवा चन्दग्रन्थे मङ्गलाचरणश्लोकाः क्षेपकाः स्युरिति ॥

तत्राहं तु "चन्दकविना कवित्वशक्त्यनुसारेणैव कवीनां नामानि पूर्वोत्तरम् उद्दिष्टानि, नतु तज्जन्मसमयानुसारेण" इति मन्ये। अतो नात्राश्चर्यं यच्चन्दकविना श्रीहर्षस्य कालिदासात् प्रथममुद्देशः कृतः। यतः संप्रत्यपि बहवः पण्डिता नैषधकाव्यं सर्वेभ्यः काव्येभ्यः प्रायः श्रेष्ठं मन्यन्ते।

कालिदासकाव्येभ्यश्चापि श्रेष्ठं मत्वा सबहुमानं पठन्ति प्रशंसन्ति च। किंच— अन्यकाव्यापेक्षयाऽस्य नैषधस्य बह्व्यष्टीकाः सन्ति। किंच यच्चन्दकविना 'श्रीहर्षः प्रसिद्धः कविरभूत्' इति मङ्गलाचरणे उक्तम्, तत् **श्रीहर्षस्य कालिदासात्** पूर्वतां साधयितुं न शक्नोति। यतश्चन्दसमयात् किंचित् प्राङ् नवीनस्यापि **श्रीहर्षस्य** प्रसिद्धिसत्त्वेन **चन्द**कविना तथा प्रतिपादितत्वात् ॥

किंच **प्रबन्धकोषा**दवगम्यते–यन्नैषधकाव्यं खिस्तस्य चतुःसप्तत्युत्तरैकादशशताब्द्याः ११७४ किंचित् प्राक् **श्रीहर्षेण** प्राणायि। यतो **जयचन्द्र**प्रधानस्य **सोमनाथ**तीर्थयात्रावृत्तान्तं श्रीहर्षस्य काश्मीरयात्रावृत्तस्य पश्चाद् **राजशेखरः** प्रबन्धकोषेऽवर्णयत्। **श्रीहर्षस्तु** नैषधकाव्यं रचयित्वैव काश्मीरं जगाम ॥

अपिच **चन्द**कविना **पृथिवीराजरासौ**नाम ग्रन्थः **प्रबन्धकोषा**द्बहुकालानन्तरं व्यरचि। यतस्तत्र **पृथुराज**मृत्युः, तत्पुत्र**रत्नसिंहस्य** **गौरि**नामयवनाधिपतिना सह सांग्रामिकं वृत्तं च वर्ण्यते स्म।

किंच इदमप्यकथयित्वा वाचंयमेन भवितुमशक्यं मया। यत् "**जोधपुरा**धीशप्रधानकविराज**मुरारिदान**नामाऽकथयत्"–'तत्राहमत्र श्रद्दधे। यत् '**पृथिवीराजरासौ**'-पुस्तकं चन्दकविनैव प्रणीतम्' इति। किंत्विदं पुस्तकं खिस्तचतुर्दशशताब्द्यां प्राणायीति मे प्रतिभाति। अत्र स इदं प्रमाणद्वयं चादर्शयत्—

(१) बहवः कवय उदाहरन्ति 'यच्चन्दो निजस्वामिना सह, स्वामिमृत्योः पश्चाद्वाचिरेणैव शत्रुभिरघानि' इति।

(२) किंच तत्र पुस्तके यवनभाषाया बहवः शब्दाः सन्ति। यवनाश्चात्र भारते खिस्तस्य चतुर्नवत्युत्तरैकादशशताब्द्यां ११९४ समागत्य न्यवात्सुः। तत् कथं तेष्वागतेष्वेव तेषां भाषायाः प्रचारः स्यात्। मम मते तु चतुर्दशशताब्द्यां वर्षशतत्रयानन्तरं यवनभाषाया लब्धप्रचारतया चन्दपुस्तके प्रवेशः संभाव्यत एव इति।

तत्राहं तु कविराज**मुरारिदान**नाम्नोऽस्मिन् प्रमाणद्वयेऽन्तिमं कथंचिच्छ्रद्दधे १।

**अथ चतुर्थाक्षेपसमाधानम्—**

(४) यदप्युच्यते "**माधवप्रणीतसंक्षेपशंकरविजये** वर्णितम्। यत् '**खण्ड**नकारः श्रीशंकराचार्याच्छात्रविचारे पराजेष्ट' इति"। तत्रोच्यते माधवप्रणीतशां-

१ सोऽयं ग्रन्थः 'पृथ्वीराजरास' इति नाम्ना प्रचलितो हि दृश्यते।

संक्षेपशंकरविजये सत्येतिहासा न दृश्यन्ते। किंतु तत्र शंकराचार्यस्य प्रशंसार्थं स्वकल्पितेतिवृत्तमुपन्यस्तं माधवेन। तत्र दिङ्मात्रमुदाह्रियते—माधवेनोक्तं "शंकरः बाणं, मयूरं, खण्डनकर्तारं श्रीहर्षं तत्प्राचीनमुदयनाचार्यं च शास्त्रार्थे विजिग्ये" इति॥ परं तु बाणमयूरौ च ख्रिस्तसप्तमशताब्द्यां प्रादुरास्ताम्। इत्थं चेतिहासविषयेषु संक्षेपशंकरविजयं किंचिदपि निश्चेतुं सर्वथाऽनर्हम्।

एवं च नाद्यापि किंचिदपि तत् प्रमाणमुपलभ्यते यद्राजशेखरस्य संमतं खण्डयेत्।

अपिच **सरस्वतीकण्ठाभरणे** श्रीहर्षश्लोका नैव धृताः सन्तीति यन्मया साधितं तन्मे मतं द्रढयतितराम्।

**सरस्वतीकण्ठाभरणं** च बृहत्कायं पुस्तकमस्ति। तत्र च ये महाकवय आख्रिस्तैकादशशताब्द्युत्तरार्धं बभूवुस्तेषां तत्प्रणीतकाव्यानां च नामानि दृश्यन्ते। सरस्वतीकण्ठाभरणं च **धाराधिपतिभोजराज**प्रणीतमिति निर्विवादं—समाप्तौ तन्नामोपलब्धेः। अथवा तत्र सभासद्भिः पण्डितैः प्रणीतं स्यादित्युभयस्मिन् संमत एकतरसंभवे तु संशय एव नास्ति॥ किंच यत्—एतादृशमहाप्रसिद्ध**नैषधीय**काव्यस्य सरस्वतीकण्ठाभरणे नामापि न दृश्यते। तत् 'श्रीहर्षो भोजराजादर्वाचीनः' इति साधयति॥

अपिच यदि **श्रीहर्ष**प्रणीता अन्ये ग्रन्था उपलभ्येरन् तदा तैरपि श्रीहर्षाविर्भावसमयः सम्यङ् निश्चेतुं शक्येत॥

अपिच—इतो नवतिर्वत्सरा अत्यगुर्यदा खलु **जेसल्मीर**भाण्डारे श्रीहर्षविरचितं **साहसाङ्कचरितं** नामैकं पुस्तकमासीत्।

परंतु संप्रति तत्र नोपलभ्यते। आशास्यते च तत् पुस्तकं कुत्रचिन्महानगरभाण्डार उपलभ्येत। अथवा तदेव नष्टं जेसल्मीरभाण्डारपुस्तकं लभ्येत।

इत्थं च संप्रति यावत् किमपि विश्वासार्हं पुस्तकान्तरं नोपलभ्यते तावत् राजशेखरस्य कथनम् "श्रीहर्षः कान्यकुब्जाधिपतिजयचन्द्रस्य सभासन्महाकविरासीत्" इति सम्यक् प्रत्येमि॥

किंच यत् श्रीहर्षोऽप्याह स्म—"मम नृपतिः **कान्यकुब्जाधिपतिरासीत्**" इति। तद्वचनं राजशेखरस्यैव संमतं भृशं साधयति॥

इत्थं चाभियुक्तयुक्तिभिरयमेव सिद्धान्तपक्षः प्रतिभाति यत्—'श्रीहर्षः ख्रिस्तद्वादशशताब्द्युत्तरार्धे बभूव' इति॥

अपिच यदाहमिमं संदर्भम् एशियाटिकसभायाः पुरस्तादवाचयं ततः कतिपयदिनानन्तरमेकस्या अज्ञातपूर्वाया **नैषधदीपिकाया** नाम टीकायाः खण्डान्युपालप्सि। तत्र चापश्यं 'यन्नैषधीयं काव्यं कालिदासादिकाव्येभ्यो बह्वर्वाचीनम्' इति।

सा टीका तु अहमदाबादसमीपे ढोलकाग्रामे चाण्डुपण्डितेन १३५३ संवत्सरे (A. D. 1296) व्यरचि । तत्र सोऽवोचत् "काव्यं नैवम्" इति ॥

इदमपि च अकथयत् "तत्समये विद्याधरविरचिता नैषधीयस्यैकैव टीकासीत्" इति ॥

अहं विद्याधरेण साहित्यविद्याधरोपनाम्ना निर्मितायास्तस्याष्टीकायाः खण्डानि जेसल्मीरनगरे अहमदाबादनगरे च प्राप्नुवम् ॥

अयं चाण्डुपण्डितष्टीकारम्भे च "श्रीहर्षः शास्त्रार्थे स्वपितुर्हीरस्य विजेतारं पण्डितं पुनः स्वयं शास्त्रविचारे स्वबुद्धिविभवेन जित्वा स्वपितुर्वैरं निरयातयत्" इति—राजशेखरस्य वचनमद्रढयत् ॥

स्वयं च चाण्डुपण्डितः पुनः स्फुटमवोचत्—"श्रीहर्षः स्वपितुर्विजेतुरुदयनस्य कृतीः खण्डनखण्डखाद्यनामकग्रन्थेनाऽखण्डयत्" इति ।

अतश्चाण्डुपण्डितस्येदं कथनं राजशेखरस्यैव मतं साधयति इति ॥

---

तस्य चास्य महाकाव्यस्य यैर्महात्मभिष्टीका कृता तेषां नामानि तत्कृतान्यग्रन्थनामसहितानि संस्कृतग्रन्थग्रन्थकर्तृनामसंग्रहपुस्तकानुसारेण प्रकाश्यन्ते—

---

१ तथा च तदीयसमाप्तौ श्लोकः—

'श्रीविक्रमार्कसमयाच्छरदामथ त्रिपञ्चाशता समधिके ··· ··· ष्वितेषु ।
तेषु त्रयोदशसु भाद्रपदे च शुक्लपक्षे त्रयोदशतिथौ रविवासरे च ॥' इति ।

२ तथा च सर्गसमाप्तिश्लोकः—

'श्रीमानालिगपण्डितः स्वसमयाविर्भूतसर्वाश्रम-
श्चाण्डूपण्डितसंज्ञितं प्रसुषुवे श्रीगौरिदेवी च यम् ।
बुद्ध्वा श्रीमुनिदेवसंज्ञविबुधात्काव्यं नवं नैषधं
द्वाविंशे च सवर्णने वितरणं सर्गे च चक्रे क्रमात् ॥' इति ॥

३ तथाचोक्तम्—

'टीकां यद्यपि सोपपत्तिरचनां विद्याधरो निर्ममे
श्रीहर्षस्य तथापि न त्यजति सा गम्भीरतां भारती ।
दिक्कूलंकषतां गतैर्जलधरैरुद्धृह्यमाणं मुहुः
पारावारमपारमम्बु किमिह स्याज्जानुदघ्नं क्वचित् ॥' इति ॥

४ 'प्रथमं तावत्कविर्जिगीषुकथायां स्वपितृपरिभावुकमुदयनमत्यमर्षणतया कटाक्षयंस्तद्ग्रन्थग्रन्थीनुद्ग्रन्थयितुं खण्डनं प्रारिप्सुश्चतुर्विधपुरुषार्थैरभिमानमनवधीयमानमवधीर्य मानसमेकतानतां निनाय' इति तत्रत्या पङ्क्तिः ।

५ इदं च (Catalogus Catalogorum) इति नामकं औफ्रेख्ट (Aufrecht)-पण्डितेन १८९१ खिस्ताब्दे प्रकाशितम् । तदेतस्य महाशयस्य महोद्योगं वर्णयितुं महेश्वर एवेश्वरः ॥

१ आनन्दराजानकः ( काव्यप्रकाशनिदर्शनकर्ता )
२ ईशानदेवः
३ उदयनाचार्यः[1] ( गीतगोविन्दव्याख्याता )
४ गोपीनाथः ( काव्यप्रकाश–दशकुमार–रघुवंश–व्याख्याकर्ता )
५ चाण्डूपण्डितः
६ चारित्रवर्धनः ( कुमारसंभव–रघुवंश–राघवपाण्डवीय–शिशुपालवध–व्याख्याकर्ता )
७ जिनराजः
८ नरहरिर्नरसिंहो वा
९ नारायणः
१० भगीरथः ( काव्यादर्श–किरातार्जुनीय–देवीमाहात्म्य–महिम्नस्तोत्र–मेघदूत–रघुवंश–शिशुपालवध–व्याख्याता )

११ भरतमल्लिको भरतसेनो वा ( अमरकोषटीका–उपसर्गवृत्ति–एकवर्णार्थसंग्रह–कारकोल्लास–किरातार्जुनीयटीका–कुमारसंभवटीका–घटकर्परटीका–द्रुतबोधव्याकरण—द्विरूपध्वनिसंग्रह–नलोदयटीका–भट्टिकाव्यटीका–मेघदूतटीका–वैद्यकुलतत्त्व–शिशुपालवधटीका–सुखलेखन–निर्माता )

१२ भवदत्तः ( शिशुपालवधटीकाकर्ता )

१३ मथुरानाथशुक्लः ( अघपञ्चविवेचन–अघपञ्चषष्टि–आचारार्क–आचारोल्लास–आत्मपुराणदीपिका–आशौचनिर्णयटीका–आश्वलायनसूत्रवृत्ति–कालतत्त्वटिप्पण–कालमाधवचन्द्रिका–कुमारीतन्त्रविवरण–कुवलयानन्दवृत्ति–कृत्यसार–क्रियाकौमुदी–गणकभूषणटीका–गणेशस्तोत्र–गुरुसूर्यगोचरविचार–गोरक्षशतकटीका–चन्द्रिकाटीका (व्याक.)छन्दःकल्पलता–जटापटलटिप्पण–जातककल्पलता–तिथिनिर्णय–दिलीपचरित–दिव्यतत्त्वलघुटीका–दुर्गार्चनामृतरहस्य–पञ्चमीसुधोदय–पाणिग्रहादिकृत्यनिर्णय–पिङ्गलवृत्ति–प्रबोधचन्द्रोदयवृत्ति–प्रश्नमनोरमाटीका- बृहत्संहिताटिप्पण–यन्त्रराज–यन्त्रराजकल्प–यन्त्रराजटीका–यन्त्रराजदीधिति–याज्ञवल्क्याचाराध्यायटीका–युद्धजयोत्सवटिप्पण–योगकल्पलता–योगवर्णन–वृत्तदर्पण–वृत्तसुधोदय–वैद्यामृतलहरी–शारदातिलकप्रकाश–शिवपूजाप्रकाश–श्यामाकल्पलता–षट्चक्रादिसंग्रह–सहमचन्द्रिका–साहित्यदर्पणटिप्पण–सिद्धान्तचन्द्रिकाटीका (?)–सुभाषितमुक्तावली–सौभाग्योपनिषट्टिप्पण–हठयोगसंग्रह–हनुमन्मन्त्रोद्धार–हारावलीटिप्पण–निर्माता )

१४ मल्लिनाथः ( अमरकोषटीका–उदारकाव्य–एकावल्यलंकारटीका–किरातार्जुनीयटीका–कुमारसंभवटीका–तार्किकरक्षाटीका–भट्टिकाव्यटीका–मेघदूतटीका–रघुवंशटीका–रघुवीरचरित–शिशुपालवधटीका–निर्माता )

१ अयं च वैशेषिकाचार्यमतरहस्य-आत्मतत्त्वविवेक-कणादसूत्रभाष्यकिरणावली-जातिनिग्रहस्थानव्याख्या-न्यायकुसुमाञ्जलि-न्यायपरिशिष्ट-न्यायवार्तिकतात्पर्यपरिशुद्धि-बोधसिद्धि-लक्षणावली-निर्मातुरुदयनाचार्यतो भिन्न एव ॥

१५ **महादेवविद्यावागीशः** ( आनन्दलहरीव्याख्यानिर्माता )

१६ **रामचन्द्रशेषः**

१७ **वंशीवदनशर्मा**

१८ **विद्याधरः**

१९ **विद्यारण्ययोगी**

२० **विश्वेश्वराचार्यः**

२१ **श्रीदत्तः**

२२ **श्रीनाथः**

२३ **सदानन्दः**

एषां त्रयोविंशतिव्याख्यातॄणां मध्यात्

| | | |
|---|---|---|
| नारायणेन | विरचिता | नैषधीयप्रकाशाख्या |
| जिनराजेन | ,, | सुखावबोधाख्या |
| मल्लिनाथेन | ,, | जीवात्वाख्या |
| चारित्रवर्धनेन | ,, | तिलकाख्या |
| नरहरिणा | ,, | दीपिकाख्या |
| विद्याधरेण | ,, | साहित्यविद्याधर्याख्या व्याख्या |

मया समधिगताः । तासु च **नारायण**विरचितप्रकाशाख्यव्याख्याया एव बह्वर्थप्रदर्शकत्वेन मुख्यत्वमङ्गीकृतम् । अन्यासु च यत्र विशेषो लब्धस्तत्र टिप्पणं दत्तम् ॥

अस्य ग्रन्थस्य शोधनोपक्रमे ये महाशयाः पुस्तकानि प्रेषितवन्तस्तेषां प्रत्युपकारं कर्तुमक्षमः केवलं परोपकारशीलताप्रकाशनार्थं नामावली प्रकाश्यते—

| | |
|---|---|
| नैषधीयचरितमूलपुस्तकत्रयम्<br>नैषधीयप्रकाशपुस्तकम्<br>साहित्यविद्याधरीपुस्तकम्<br>सुखावबोधापुस्तकम्<br>जीवातुप्रथमसर्गस्य लिखितं पुस्तकम् | जयपुरराजगुरुश्रीनारायणभट्टपर्वणीकराः |
| तिलकाख्यव्याख्यापुस्तकम् | जयपुरराजगुरुदाधीचचन्द्रेश्वरशर्माणः |
| नरहरिकृतदीपिकापुस्तकम् | महामहोपाध्यायपण्डितदुर्गाप्रसादशर्माणः |
| जीवातुव्याख्यापुस्तकम् ( मुद्रितम् ) | जयपुरराजकीयपुस्तकालयाध्यक्षाः |
| नैषधीयप्रकाशस्य पुस्तकान्तरम् | ग्वालियरनगरतो भट्टविश्वनाथशर्माणः । |

एवं महता परिश्रमेण सटीकमिदं महाकाव्यं संशोध्य **निर्णयसागरयन्त्रालया**धिपतये **'जावजी दादाजी'** इत्यभिख्यया प्रसिद्धाय श्रेष्ठिनेऽदाम्। तदत्र प्रमादस्य मनुष्यासाधारणधर्मत्वान्मद्दोषादक्षरयोजकदोषाद्वा क्वचनाशुद्धिः स्थिता जाता वा तां सहृदयहृदयाः संशोध्य पाठयन्तु च्छात्रान्। अहमपि द्वितीयावृत्तौ शोधयिष्यामि। यतः—

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥

इति प्रार्थयति

पञ्चनददेशीयविश्वविद्यालयान्तर्गतसंस्कृतश्रेण्यध्यक्षप्रधानाध्यापकपण्डित—

**शिवदत्तशर्मा।**



॥ श्रीः ॥

# नैषधीयचरितस्यानुक्रमणिका ।

विषयानुक्रमणिका तु जयपुरसंस्कृतपाठशालायामायुर्वेदाध्यापकैः आर्यालंकार-शतक—कच्छवंश[1]—छन्दश्छटामण्डन—जयपुरविला-समुक्तकमुक्तावली—पलाण्डुशतक—होलामहोत्सवाद्यनेककाव्यनिर्मातृश्रीकृष्णरामकविभिर्विरचितसारशतकान्तर्गतनैषधीयचरितसारतः कृतार्थेति विचार्य नैषधीयचरितसार एव लिख्यते—

कविषु दधतमुत्कर्षं विस्फुरदनवद्यहृद्यवाग्वर्षम् ।
इह खलु खलप्रधर्षं श्रीहर्षं नौमि हर्षसंघर्षम् ॥ १ ॥

१ सर्गे कथासारः—

भूपः कोऽपि नलोऽनलद्युतिरभूत्तत्रानुरागं दधौ
वैदर्भी दमयन्तिका गुणरुचिः सोऽप्यास तस्यां स्पृही ।
जातु स्वान्तविनोदनाय विरही लीलाटवीं पर्यट-
न्हैमं हंसमसौ निगृह्य तरसा तूर्णं दयालुर्जहौ ॥ १ ॥

२ सर्गे—

राजंस्तां दमयन्तिकां त्वयि तथा कर्तास्मि रक्तां यथा
शक्रादीनपि हास्यतीति नृपतिं हंसः कृतज्ञोऽभ्यधात् ।
एवं चेत्खग ! साधयेप्सितमिति प्रोक्तः स राज्ञा मुदा
प्रागुड्डीय ददर्श कुण्डिनगतो भैमीमटन्निष्कुटे[3] ॥ २ ॥

३ सर्गे—

मामुद्दिश्य किमेषि भैमि ! चटुविर्नालोऽस्मि विस्ते रुचि-
श्चेन्मय्यस्ति नलं वृणीष्व बत तामुक्त्वा व्यरंसीद्द्वयः ।
तस्मै ब्रूहि तथा यथा स नृपतिर्मामुद्वहेदित्युपा-
दिष्टो भीमजया खगो द्रुतगतिः सिद्धिं नलायालपत् ॥ ३ ॥

४ सर्गे—

क्षामाङ्गी विरहाधिना विदधती निन्दां सुधांशोर्ज्वर-
ज्वालाभिर्द्रुतमुर्मुरीकृतसुमाकल्पाथ साऽमूमुहत् ।
भीमस्तत्परिचारिकाकलकलाहूतस्तथा वीक्ष्यतां
ज्ञातो व्याधिरयि ! स्वयंवरमहं कर्तास्म्यवादीदिति ॥ ४ ॥

---

१ अस्मिंश्च महाकाव्ये जयपुरमहाराजपूर्वजानां प्रभावो वर्णितः । २ इदं नलदमयन्त्योरुभयोरपि विशेषणम् । ३ गृहारामे । ४ नलसंबन्धी । ५ पक्षी । ६ पक्षी, हंस इति यावत् ।

५ सर्गे—

ज्ञात्वा नारदतः स्वयंवरविधिं भैम्याः स्पृहालुर्हरिः
सार्धं दिक्पतिभिः पफाण पृथिवीं शच्या शुचा वीक्षितः ।
अस्माद्दौत्यमुपेत्य याहि नृप भो ! भैमीमदृष्टो भटै-
स्तामस्मास्वनुकूलयाश्विति नलं सोऽयुङ्क्त दौत्ये छली ॥ ५ ॥

६ सर्गे—

भूजानिर्भुवनैकदृश्यतनुरप्युच्चैरदृश्यस्तदा
कक्षाः सप्त वगाह्य भीमदुहितुः प्रासादमासादयन् ।
तां तत्र प्रसमीक्ष्य खण्डनपरां गीर्वाणदूतीगिरां
दूरादुच्छ्वसिति स्म चेतसि भृशं दूनोऽपि दौत्येन सः ॥ ६ ॥

७ सर्गे—

अश्रान्तं तरदन्तरोऽद्भुतरसाकूपारपूरान्तरे
प्रत्यारभ्य मुखान्नखावधि नलस्तां प्रादुरास स्तुवन् ।
सा तु व्यक्तममुं समीक्ष्य चकिता तद्रूपलुब्धा सखी-
ष्वाश्चर्यस्तिमितासु कोऽसि किमिह प्राप्तोऽस्यपृच्छत्स्वयम् ॥ ७ ॥

८ सर्गे—

दूतं विद्धि वराङ्गि ! मां दिविषदां धन्यासि यत्त्वामहो
सोऽप्याशापतिभिः सह स्वयमिदं ब्रूते वृषा मद्गिरा ।
अस्मास्वन्यतमं वृणीष्व कमपि त्वं नन्दने ! नन्द भो !
मा कुत्रापि नरे स्खलेति बहुधा भैमीं नलोऽलोभयत् ॥ ८ ॥

९ सर्गे—

चित्तं मेऽस्ति नले न लेखपतिषु त्वं कोऽनलश्रीस्तये-
त्युक्तः प्रोज्झ्य सुराननलं श्रयसि किं मुग्धास्यवोचत्स ताम् ।
पश्चादश्रुमुखीमुदीक्ष्य सहसा सोऽहं नलस्तत्प्रिये !
मा रोदीरिति तत्र वादिनि सैं विर्दैवाद्दिवोऽवातरत् ॥ ९ ॥

१० सर्गे—

आजग्मुर्महति स्वयंवरमहे नन्दन्नले नायका-
श्चत्वारो हरितां हरिप्रभृतयः कृत्वा नलस्याकृतिम् ।
वाग्देव्यां नृपवृन्दवर्णनविधौ बद्धोद्यमायां पुरो
मध्येराजकमाजुहाव तनयां भीमो महीवासवः ॥ १० ॥

११ सर्गे—

एते सन्ति सुरा इतः पुनरिमे दीव्यन्ति विद्याधराः
किंच स्फाररुचः पृथक्पृथगितो द्वीपाधिपा आसते ।

१ इन्द्रः । २ 'स्तुवन्' इत्यत्रान्वयः । ३ 'पृथ्वीपालकपालके' इत्यप्यर्थः । ४ रल-योरभेदात् 'नले' इत्यपि । ५ नलतुल्यः, अग्नितुल्यश्च । ६ तस्मिन्नले । ७ हंसः

सर्वे योग्यतमा वृणीष्व कमपि स्यायत्र वा त्वद्रुचि-
र्वाचा[1] भूरि विलोभितापि विजहौ सा चित्तचश्चलताम् ॥ ११ ॥

१२ सर्गे—

पार्श्वे पश्य परे त्वदर्थमपरे द्रागा समुद्रादिमे
प्राप्ताः प्राज्यपराक्रमक्रमयुजः पद्माक्षि ! पृथ्वीभुजः ।
एषु स्वीकुरु कंचिदेकमिति वाग्देव्योपदिष्टा पुरो
यान्ती वीक्ष्य विसिस्मिये स्मितवतः सा पञ्च मञ्चे नलान् ॥ १२ ॥

१३ सर्गे—

पञ्चस्वत्र[2] नलेषु तन्वि ! कमपि श्रीवीरसेनोदयं
देवं मङ्क्षु[3] परीक्ष्य किं भ्रमयसि व्यर्थं त्वमस्मानिति ।
वाचा श्लेषवचःप्रपञ्चफलितामर्त्येशमर्त्येशया
प्रोक्ता पञ्चनलीं विभाव्य समभूत्संदेहभूर्भीमभूः ॥ १३ ॥

१४ सर्गे—

स्तोत्रप्रीतदिगीशदर्शितनला मन्दाक्षमन्दा सती
मत्वा तानियमुत्ससर्ज करतः कण्ठे नलस्य स्रजम् ।
दिक्पालेषु गतेषु स्वं सह गिरा दत्त्वा वरानम्बरा-
त्सामोदा निपपात मूर्धनि तयोः कल्पप्रसूनावलिः ॥ १४ ॥

१५ सर्गे—

रत्नालंकृतिभिश्चमत्कृतिमती स्नानप्रमृष्टाकृति-
र्भैमी मातृभिरुत्सवप्रकृतिभिः संस्कृत्य सज्जीकृता ।
भूषोद्भासिबलो नलोऽथ विभवैश्चित्रोऽपि पीतो दृशा
स्त्रीभिस्तत्र जगाम कुण्डिननृपाहूतो विवाहोत्सुकः ॥ १५ ॥

१६ सर्गे—

भीमः श्रीनिषधेश्वरेण दुहितुः संपाद्य पाणिग्रहं
जन्यान्भक्तमभोजयद्बहुसितं सौजन्यसिन्धुर्मुदा ।
इत्थं तां परिणीय भीमभवने रात्रीरुषित्वा कति
प्रीतात्मा विलसंस्तया स निषेधोद्देशान्प्रतस्थे नलः ॥ १६ ॥

१७ सर्गे—

लिप्सुर्भीमसुतां बलेन कलितः कूर्दन्करालः कलि-
र्मा गास्तत्र वृतस्तया नल इति प्रोक्तोऽपि देवैः पथि ।
भैमीं तर्हि वियोजयामि नलतः पापी प्रतिज्ञाय हा !
भ्राम्यन्नाप कथंचिदस्य निलयारामे बिभीतं बिभीः ॥ १७ ॥

---

१ वाग्देव्या । २ पूर्ववर्णितानिति शेषः । ३ प्राग्रुहि ।

१८ सर्गे—

इत्थं तामथ मेदिनीतलशचीमासाद्य सौधे महा-
रत्नस्फूर्जितकाञ्चनक्षितिभृति क्ष्माचक्रशक्रो नलः ।
नक्तं यत्नवशीकृतां क्रमगलल्लज्जां कलाकोविदः
कंदर्पोदधिपारलम्भनतरीमुच्चैर्मुदारीरमत् ॥ १८ ॥

१९ सर्गे—

प्रातर्बोधविधित्सवो रससुधावर्षाः सहर्षा जगु-
र्गाथा बोधकराः कराहतकला[1]तोद्या गृहोद्यानगाः ।
बुद्ध्वा प्राङ्निषधेश्वरः सुरसरित्स्नातो रथस्थः समा-
गच्छंस्तैरवलोकितो ननु पुनस्तन्निर्गमः सौधतः ॥ १९ ॥

२० सर्गे—

प्राप्ते राज्ञि पुरोगता वितरति स्वर्णाम्बुजन्मान्युरी-
कुर्वाणा नियमं समापयति सा मानं मनागाश्रिता ।
अङ्के कुर्वति लज्जिता सहचरीरुत्सार्य नीविस्पृशि
द्रागुत्थाय चचाल चालसगतिर्लोलन्नितम्बा बहिः ॥ २० ॥

२१ सर्गे—

सौधान्निःसरते स्मितं विकिरते राज्ञां नमो गृह्णते
स्नात्वा त्र्यम्बकमर्चते मुररिपोः स्तोत्राण्यहो ग्रथ्नते ।
भुक्त्वा पर्यटते शनैः शतपदं मध्ये प्रियामञ्चते
सायं वर्णयते नमांसि कलये तस्मै नलक्ष्माभृते ॥ २१ ॥

२२ सर्गे—

सायं सांध्यविधिं विधाय विगलद्दोषः प्रदोषस्तवं
प्रत्यारभ्य विधूदयावधि वधूत्सङ्गादनङ्गी स्तुवन् ।
तस्या [2]ग्लौविषया गिरोऽमृतकिरः श्रुत्वा स काव्यस्थिर-
प्रज्ञः प्राप परं स्मरन्स्मरनवान[3]न्दो नलो विस्मयम् ॥ २२ ॥



१ कलातोद्यानि मधुरवाद्यानि । २ चन्द्रविषयाः । ३ अत्रानन्दपदेन नैषधीयचरित काव्यस्यानन्दाङ्कता सूचिता ।

## नैषधीयप्रकाशव्याख्यायां समुद्धृतान्यग्रन्थ-ग्रन्थकृतां सूची।

# सांकेतिकशब्दसूची ।

| | | | | | |
|---|---|---|---|---|---|
| उ० सू० | = | उणादिसूत्रम् (शाक०) | बृ० | = | बृहदारण्यकम् |
| ऋ० सं० | = | ऋग्वेदसंहिता | भा० | = | श्रीमद्भागवतम् |
| कामंद० | = | कामन्दकीयनीतिः | मनु०; म०स्मृ० | = | मनुस्मृतिः |
| का० प्र० | = | काव्यप्रकाशः | याज्ञ०आचा० | = | याज्ञवल्क्यस्मृतिः (आचाराध्यायः) |
| किरा० | = | किरातार्जुनीयम् | रघु० | = | रघुवंशम् |
| कुमार० | = | कुमारसंभवम् | राम० | = | रामरक्षा |
| ग० सू० | = | गणसूत्रम् (पा०) | रामा० उ० | = | वा० रामायणम् (उत्तरकाण्डम्) |
| गी०; भ०गी० | = | भगवद्गीता | वा० | = | वार्तिकम् |
| छा० | = | छान्दोग्योपनिषत् | विष्णु० | = | विष्णुपुराणम् |
| तै० | = | तैत्तिरीयोपनिषत् | वै० श० | = | वैराग्यशतकम् |
| द० रू० | = | दशरूपकम् | शिशु० | = | माघकाव्यम् |
| दे० मा० | = | मार्कण्डेयपुराणम् | हि० | = | हितोपदेशः |
| नी० श० | = | नीतिशतकम् | | | |
| नै० | = | नैषधीयचरितम् | | | |
| प० | = | परिभाषा (सिद्धा०) | | | |



॥ श्रीः ॥

# महाकविश्रीहर्षप्रणीतं

# नैषधीयचरितम् ।

## नारायणकृतया नैषधीयप्रकाशाख्यव्याख्यया समेतम् ।

### प्रथमः सर्गः ।

वैदेही यस्य वामे जयति जयजनिर्दक्षिणे लक्ष्मणोऽपि
श्रीमानग्रे हनूमानतुलबलचयो हस्तविन्यस्ततत्त्वः ।
कोदण्डं काण्डमेकं दधदहितकुलध्वंसकारी समन्ता-
दव्याद्व्याजभव्याकृतिसलिलनिधिर्जानकीजानिरस्मान् ॥
दशकंधरकरिसिंहः सीताचेतःसरोजरोलम्बः ।
रघुकुलकैरवचन्द्रः पायादायासतो रामः ॥
भद्राय भूयाद्भवतां श्रीरामो भक्तिभावितः ।
स्मृतेरुज्जृम्भते यस्य पदवी सुरदुर्लभा ॥
नत्वा श्रीनरसिंहपण्डितपितुः पादारविन्दद्वयं
मातुश्चापि महालसेत्यभिधया विख्यातकीर्तेः क्षितौ ।
श्रीरामेश्वरसीतयोः सुमनसोर्गुर्वोरगर्वो यथा-
बुद्धि श्रीनिषधेन्द्रकाव्यविवृतिं निर्माति नारायणः ॥
प्रणम्य शंकरं सोममनन्तं श्रीपतिं समम् ।
कुर्वे नाम्ना नैषधीयप्रकाशं सुहृदां मुदे ॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नसमाप्त्यर्थं शिष्टाचारपरिप्राप्तम् 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' (का०प्र०१।२) इति मङ्गलाचरणं कर्तव्यमिति ग्रन्थकृच्छ्रीहर्षनामा कविर्गूढं सबीजरघुनाथाभीष्टदेवतानमस्काररूपं मङ्गलमाचरति । अन्ये तु 'विशिष्टवस्तुनिर्देशलक्षणं मङ्गलम्' इत्याहुः—

**निपीय यस्य क्षितिरक्षिणः कथास्तथाद्रियन्ते न बुधाः सुधामपि ।**
**नलः सितच्छत्रितकीर्तिमण्डलः स राशिरासीन्महसां महोज्ज्वलः ॥१॥**

**निपीयेति** ॥ अत्र पुण्यश्लोकनलरूपविशिष्टवस्तुनिर्देशेन निर्विघ्नग्रन्थसमाप्तिरित्यभिप्रायेणाह—स नल आसीत् इति । पृथ्वादीनां स्मरणमपि सकलाभीष्टहेतुः, किं

१ 'अगुर्वीम्' इति पाठान्तरे विवृतिविशेषणम् । २ 'सुहृदो' इति पाठः । ३ 'सबीजम्' इति पाठः । ४ क्वचित् 'निपीयेति' इत्युत्तरत्रास्य पाठः । ५ 'इत्यन्वयः' इति पाठः ।

पुनः कीर्तनमिति । किंविशिष्टो नलः—महसां राशिः प्रतापानामाश्रयः । यद्वा,—महसां तेजसां राशिः सूर्य इव स्थितः । लुप्तोपमा, लुप्तोत्प्रेक्षा वा । एतेन स एव तेजस्वी सूर्यवत्, नान्य इति व्यङ्ग्यम् । स कः—बुधाः सुमतयो यस्य प्रजापालनरूपाः कथा गोष्ठीर्निपीय सादरं श्रुत्वा सुधामप्यमृतमपि तथा नाद्रियन्ते यथा पूर्वममृते यागादिसाध्ये सादरा आसंस्तथा नलकथाश्रवणानन्तरं नेति ततोऽप्यधिका नलकथेति भावः । 'कथाम्' इति पाठः साधीयान् । शर्करादिमधुरद्रव्यादपि सुधायामादर इत्यपेरर्थः । यदीया कथा अमृतादपि सरसा इत्यर्थः । (एतेन इन्द्रादीनां त्यागेन नले दमयन्त्यनुरागस्यौचिती युक्ता) । यद्वा,—बुधा देवाः सुधान्धसोऽपि तां नाद्रियन्ते । यत्कथा अमृतादपि मनोहरा इत्यर्थः । यद्वा,—वृष्ट्यादिना क्षितिरक्षिणो बुधा देवा यत्कथामाकर्ण्य सुष्ठु धाम मनोहरां कान्तिं पाति रक्षतीति सुधामपाश्चन्द्रस्तस्मिन्नलकथावत्पूर्ववद्वा नाद्रियन्ते । यद्वा,—बुधा ज्ञातारः क्षितिरक्षिणोऽन्ये राजानो यज्ञादिनाऽमृतमपि नाद्रियन्त इति वा । यद्वा,—फणामण्डलधारणादिना क्षितिं रक्षन्ति ते क्षितिरक्षिणः शेषतक्षकादयो नागाः 'सुधा भुजगभोजनम्' इत्यभिधानात्स्वीयं भोजनममृतमपीन्द्रेण रक्षणार्थमर्पितममृतं नाद्रियन्ते । यतो बुधास्तारतम्यविज्ञातारः क्षितिरक्षित्वं तक्षकादिषु शेषसाहचर्यादुपचर्यते । एतेन व्याख्यानत्रयेण नलकीर्तेर्लोकत्रयव्यापित्वं द्योत्यते । यद्वा,—'क्षितिः, अक्षिणः' इति पदद्वयम् । अक्षो विभीतको निवासोऽस्यास्तीत्यक्षी कलिः । यस्य कथा निपीय स्थितस्य पुरुषस्याक्षिणः कलेः क्षितिर्नाशो भवति । 'क्षि क्षये' इति धातुः । तथा चोक्तम्—'कर्कोटकस्य नागस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥' ( वन० ७९।११ ) इति । तथा यस्य कथा निपीय बुधाः सुधामपि नाद्रियन्त इति । 'तथा'शब्दः समुच्चयार्थो व्याख्येयः । यद्वा,—अक्षाः पाशास्ते क्रीडार्थं यस्य विद्यन्ते सोऽक्षी तस्य द्यूतव्यसनिनोऽपि नलस्य क्षितिः पृथिवी । राज्यमित्यर्थः । एवंविधस्यापि भूपतित्वमित्याश्चर्यम् । 'तथा'शब्दोऽत्रापि समुच्चयार्थः । यत एवंविधोऽत एव कीर्तेर्मण्डलं यशोमण्डलम्, सितं च तच्छत्रं च सितच्छत्रं श्वेतातपत्रमिवाचरन्तं कृतं वा लोकत्रयव्याप्तिसमर्थं कीर्तिमण्डलं यस्य येन वा । पुनः किंविशिष्टः—महोज्ज्वलो महैरुत्सवैरुज्ज्वलो दीप्यमानः । एतेनोत्साहयुक्तत्वं तस्य महान्परमकाष्ठापन्न उज्ज्वलः शृङ्गारो यस्येति वा । यद्वा,—महानुज्ज्वलः शृङ्गारो यत्र दमयन्त्याः । एतेन पद्मनलीमध्ये तस्यैव वृतत्वात् । यद्वा,—महसा तेजसा प्रतापेन ज्वलतीति महोज्ज्वलः । सूर्यपक्षेऽपि 'आदित्याज्जायते वृष्टिः' इति वृष्टिप्रदत्वेन क्षितिरक्षिणः सूर्यस्य कथा निपीय बुधाः सुधामपि चन्द्रे विषये तथा नाद्रियन्ते । तस्य तत्रासामर्थ्यात् । किंभूतः सूर्यः—श्वेतातपत्रीकृतं कीर्तियुक्तं स्तुतियुक्तं विस्तारयुक्तं वा मण्डलं यस्य । स्तोता श्वेतच्छत्राकारं मण्डलं स्तौति । महसा तेजसा ज्वलतीति महोज्ज्वलः । 'कीर्तिः प्रतापयशसोर्विस्तारे कर्दमेऽपि

---

१ 'महसा तेजसा ज्वलति इति व्याख्यानं तु जकारस्य द्वित्वानुपपत्त्योपेक्ष्यम्' इति जिनराजसूरिविरचितसुखावबोधाख्या व्याख्या 'अनचि च' (८।४।४७) इति सूत्रासरणमूलिका ।

च' इति विश्वः । 'महस्तूत्सवतेजसोः', 'शृङ्गारः शुचिरुज्ज्वलः' इत्यमरः । 'ज्ञातृचान्द्रिसुरा बुधाः' इति क्षीरस्वामी । कलिपक्षे,–'निपीय स्थितस्य' इत्यध्याहारेणैककर्तृकत्वाल्ल्यप्साधुः । निपीयेति 'पीङ् पाने' । क्षितिरक्षिण इत्यत्र ताच्छील्ये णिनिः । कथेति 'चिन्तिपूजि–' (३।३।१०५) इति कर्मण्यङ् । आद्रियन्त इति 'दृङ् आदरे' इति तौदादिकान्ङित्त्वात्तङि प्रथमपुरुषे झे परतः शे विकरणे धातोः 'रिङ्शयक्–' (७।४।२८) इति रिङादेशेयङादेशयोः 'अतो गुणे' (६।१।९७) इति पररूपे च रूपं सिद्धम् । बुध्यन्त इति बुधाः 'इगुपध–' (३।१।१३५) इति कः । सितच्छत्रितेत्यत्राचारक्विबन्तात्, 'तत्करोति–' (ग०सू०२०४) इति ण्यन्ताद्वा निष्ठा । 'निष्ठायां सेटि' इति णेर्लोपः । ज्वल इत्यत्र 'ज्वलितिकसन्तेभ्यो णः' ( ३।१।१४० ) इति णस्य पाक्षिकत्वात्पचाद्यच् । अस्य महाकाव्यत्वम् 'सर्गबन्धो महाकाव्यम्' इति लक्षणात् । नायकश्चात्र धीरललितः, 'निश्चितो धीरललितः कलासक्तः सुखी मृदुः' इति । रसश्चात्र शृङ्गारः । स द्विविधः–संभोगशृङ्गारो विप्रलम्भशृङ्गारश्च । तस्यापरे रसा अङ्गभूताः । एवं सर्वत्र । अस्मिन्सर्गे 'इत्थममुम्' (नै० १।१४३) इति यावद्वंशस्थं वृत्तम् १

**रसैः कथा यस्य सुधावधीरणी नलः स भूजानिरभूद्गुणाद्भुतः ।**
**सुवर्णदण्डैकसितातपत्रितज्वलत्प्रतापावलिकीर्तिमण्डलः ॥ २ ॥**

**रसैरिति** ॥ 'सर्वं वाक्यं सावधारणं भवति' इति न्यायात्स नल एव भूजानिर्महीपतिरभूत् । नान्य इत्यर्थः । भूर्जाया यस्येति 'जायाया निङ्' (५।४।१३४) । स कः । यस्य कथा नवभिः शृङ्गारादिभी रसैः षड्रसां सुधामवधीरयति तिरस्करोतीत्येवंशीला सुधावधीरणी । सुधायाः षड्रसत्वं व्याख्यातृप्रसिद्ध्या व्याख्यातम् । मधुररसयुक्तैव वा । यस्य कथा रसैः कृत्वा सुधाया अवधिम् । उत्कृष्टां सुधामिति यावत् । तामीरयति क्षिपतीत्येवंशीला । **'सुधावधीरिणी'** इत्यपि पाठः । तत्रापि स एवार्थः । यद्वा,—यस्य कथा रसैर्हेतुभिः सुधाया अवधिः । एतत्परममृतं नास्तीत्यर्थः । 'ढ्रलोपे–' (६।३।१११) इति दीर्घः । एतेनेन्द्रादिपरित्यागेन नले भैम्यनुरागस्यौचित्यम् । यद्वा,–शोभनं धावतीति सुधा वा पुण्यसंचारिणी धीर्यस्येति मन्त्रशक्तिमत्त्वं तस्य द्योत्यते । रणी नित्यं रणोऽस्यास्तीति । अनेनोत्साहशक्तिमत्त्वम् । भूजानिरित्यनेन प्रभुशक्तिमत्त्वम् । गुणैः शौर्यादिभिः संधिविग्रहादिभिर्वाऽद्भुत आश्चर्यरूपः । अत एव कवेरेतस्य वर्णनं युक्तम् । यद्वा,—'रसा, एः' इति पदद्वयम् । यस्य कथा एः कामस्य, रसा भूः स्थानम् । सर्वाभिलाषजनिकेत्यर्थः । कीदृशो नलः–सुवर्णेत्यादि । सुवर्णस्य दण्डः सुवर्णदण्डः । एकं च तत्सितं च तदातपत्रं चैकसितातपत्रम् । सुवर्णदण्डश्च एकसितातपत्रं च सुवर्णदण्डैकसितातपत्रे । सुवर्णदण्डैकसितातपत्रे कृते तद्वदाचरिते

---

१ अत्र 'श्रीहर्षैर्यमकमुरजसर्वतोभद्रप्रमुखान्बन्धानर्थापुष्टिकराननादृत्यार्थपुष्टिकरोऽनुप्रासाभिधशब्दालंकारः प्रायः प्रयुयुजे' इति चारित्रवर्धनविरचिततिलकव्याख्या । अत्र श्लोकेऽनुप्रासः शब्दालंकारः । सुधाकथयोरौपम्ये प्रतीते सति सुधानादरत्वेन कथाधिक्यप्रतिपादनाद्व्यतिरेकोऽर्थालंकारोऽपि । अन्यच्च नलसूर्यवर्णनयोः प्राकरणिकाऽप्राकरणिकयोः श्लिष्टपदोपनिबन्धे श्लेषालंकारोऽपि । सूर्येण सहाभेदप्रतिपादनाद्रूपकम् । तस्मात्तिलतण्डुलन्यायेनात्र संकरः' इति विद्याधरविरचितसाहित्यविद्याधरी ।

**कथाप्रसङ्गेषु मिथः सखीमुखात्तृणेऽपि तन्व्या नलनामनि श्रुते ।**
**द्रुतं विधूयान्यदभूयतानया मुदा तदाकर्णनसज्ज्ञकर्णया ॥ ३५ ॥**

**कथेति** ॥ मिथः परस्परं कथाप्रसङ्गेषु सखीमुखात्तृणेऽपि विषये नलनाम्नि तन्व्या दमयन्त्या श्रुते सति अनया भैम्या मुदा हर्षेण तस्य नलनाम्न आकर्णने श्रवणे सज्जौ तत्परौ कर्णौ यस्या एवंविधयाऽभूयत जातम् । किं पुनर्वाच्यं नलनृपवर्णने सज्जकर्णत्वम् । किं कृत्वा—अन्यत्कथान्तरं कार्यान्तरं वा द्रुतं झटिति विधूय परित्यज्य । एता मयि स्नेहान्नलराजकथा एव कथयन्तीति ज्ञात्वेत्यर्थः । तन्व्या इति विरहव्यथया कृशत्वम् । अभूयत । भावे यगात्मनेपदे ॥ ३५ ॥

**[1]स्मरात्परासोरनिमेषलोचनाद्बिभेमि तद्भिन्नमुदाहरेति सा ।**
**जनेन यूनः स्तुवता तदास्पदे निदर्शनं नैषधमभ्यषेचयत् ॥ ३६ ॥**

**स्मरादिति** ॥ सा भैमी इति पूर्वोक्तेन विन्यासेन यूनस्तरुणान् स्तुवता जनेन सख्यादिना प्रयोज्येन नैषधं नलं तदास्पदे मदनस्थाने निदर्शनं दृष्टान्तमभ्यषेचयत् स्थापयामास । इतीति किम्—हे जन, परासोः परागता असवः प्राणा यस्य तस्मान्मृतात्, अत एवानिमेषलोचनान्निमेषरहितनेत्रात्स्मरात्कामादहं बिभेमि, तत्तस्माद्भिन्नमन्यं दृष्टान्तमुदाहर वद इति तेन जनेन पृष्टे सति नलं दृष्टान्तेन स्थापयामास । असौ राजा कामोपम इति जनो यं कंचन स्तौति तदा भैम्याज्ञया काममुपमानं त्यक्त्वा नलमुपमानं करोतीत्यर्थः । अन्यस्योपमानस्याभावान्नलमेव दृष्टान्तं जनो ददातीत्यर्थः । तस्मात्स्मराद्भिन्नमित्येकं पदं वा । देवत्वादनिमेषत्वं मृतत्वेनोत्प्रेक्षितम् । मृतस्य राजादेः स्थानेऽन्योऽभिषिच्यते । स्मरादिति 'भीत्रा–' ( १।४।२५ ) इत्यपादानम् । आस्पदे इति 'आस्पदं प्रतिष्ठायाम्' ( ६।१।१४६ ) इति साधुः । नैषधमिति निषधानामयमिति संबन्धमात्रेऽण् । प्रकरणादिना स्वस्वामिभावाधिगतिः । निषधानां राजा इत्यर्थे तु जनपदलक्षणाञो बाधके नादित्वात् 'कुरुनादिभ्य–' ( ४।१।१७२ ) इति ण्ये नैषध्यमिति स्यात् । अभ्यषेचयदित्यत्र 'प्राक्सितात्–' ( ८।३।६३ ) इति षत्वम् ॥ ३६ ॥

**नलस्य पृष्टा निषधागता गुणान्मिषेण दूतद्विजबन्दिचारणाः ।**
**निपीय तत्कीर्तिकथामथानया चिराय तस्थे विमनायमानया ॥ ३७ ॥**

**नलस्येति** ॥ अनया भैम्या निषधागता निषधदेशादागता दूतद्विजबन्दिचारणाः चारविप्रस्तुतिपाठका देशान्तरभ्रमणजीविनो नलस्य गुणान् सौन्दर्यादीन् । भवतां देशे को राजा, कीदृग्गुणः, कथं प्रजाः पालयतीति मिषेण व्याजेन पृष्टाः । अथ प्रश्नानन्तरं तत्कीर्तिकथां निपीय नलयशोवर्णनमाकर्ण्य अनया भैम्या चिराय विमनायमानयाऽहृष्टचित्तया दुर्मनायमानया तस्थे स्थितम् । ईदृग्गुणो राजा मया कथं लप्स्यते इति विमनस्कता । अकारप्रश्लेषेणाऽविमनायमानया जातम्, चिरकालमाकर्णयन्त्यैव स्थिरचित्तयाऽवहितचित्तया जातमिति व्याख्येयम् । **'तत्कीर्तिसुधाम्'** इति पाठः । चिराय निपीय इति वा संबन्धः । 'अकथितं च' (१।४।५१) इति द्विकर्मकत्वात्प्रच्छेरप्रधाने

१ '°नुपङ्गेषु' इति पाठान्तरम् । 'अत्र हर्षौत्सुक्ययोः शबलताभावः शबलतालंकारः' इति **साहित्यविद्याधरी** । 'अर्थान्तरोपयुक्तोऽपि नलशब्दो नृपस्मारकतया तथाकर्षकोऽभूदिति रागातिशयोक्तिः' इति **जीवातुः** । २ 'अत्र गुणसंकीर्तनलक्षणा स्मरदशोक्ता' इति **साहित्यविद्याधरी** । 'अत्र रागातिशयोक्तिः' इति **जीवातुः** । ३ '°ऽभिमनायमानया' इति पाठः ।

कर्मणि निष्ठा, तयाभिहितत्वान्न द्वितीया—चारणाः इति । गुणान् इति 'न लोका' (२।३।६९) इति षष्ठीनिषेधाद्द्वितीया । तस्थे इति भावे तङ् । पक्षे, निपीय तस्थे इत्यत्र मुखं व्यादाय स्वपितीतिवत्तुल्यकाल एव ल्यप् । विमना इवाचरति इति 'कर्तुः क्यङ् सलोपश्च' (३।१।११), 'अकृत्सार्वधातुकयोर्दीर्घः' (७।४।२५) ङित्त्वाच्छानच् ॥ ३७ ॥

पूर्वं श्लोकपञ्चकेन भैम्या नले श्रवणानुरागं प्रतिपाद्य, इदानीं लिपिस्वप्नादौ दर्शनानुरागं प्रतिपादयति—

**प्रियं प्रियां च त्रिजगज्जयिश्रियौ लिखाधिलीलागृहभित्ति कावपि ।**
**इति स्म सा कारुवरेण लेखितं नलस्य च स्वस्य च सख्यमीक्षते ॥३८॥**

**प्रियमिति** ॥ सा भैमी इति स्वाज्ञया कारुवरेण कुशलेन लिपिकर्त्रा प्रयोज्येन लेखितं नलस्य स्वस्यात्मनश्च सख्यं रूपसाम्यमीक्षते स्म पश्यति स्म । इतीति किम्—हे कारुवर, त्वमधिलीलागृहभित्ति लीलागृहं क्रीडागृहं तस्य भित्तौ (विभक्त्यर्थेऽव्ययीभावः) प्रियं नायकं प्रियां नायिकां चोभौ कावप्यनिर्दिष्टनामानौ लिख । किंभूतौ—त्रिजगज्जयिश्रियौ त्रयाणां जगतां समाहारस्त्रिजगत्, तज्जयतीत्येवंशीला श्रीः शोभा ययोः । जगत्त्रय्यामावामेव सुन्दरौ इति । जगज्जयीत्यत्र 'जिदृक्षि—' (३।२।१५७) इतीनौ पुंवद्भावः ॥ ३८ ॥

**मनोरथेन स्वपतीकृतं नलं निशि क्व सा न स्वपती स्म पश्यति ।**
**अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम् ॥ ३९ ॥**

**मनोरथेनेति** ॥ स्वपती निद्राणा सा भैमी मनोरथेन वाञ्छया स्वपतीकृतम् अस्वपतिः स्वपतिः कृतः स्वप्राणेश्वरीकृतं नलं क्व निशि कस्यां रात्रौ न पश्यति स्म, अपि तु सर्वस्यामपि । दिवा दृष्टस्य स्वप्ने दर्शनात् कदाप्यदृष्टस्य कथं दर्शनमित्यर्थे हेतुमाह—अदृष्टमिति । सुप्तिः स्वप्नः कदाचिददृष्टमप्यर्थं वस्तु अदृष्टवैभवाद्धर्माधर्मसामर्थ्याज्जनदर्शनातिथिं जनदर्शनगोचरं करोति । 'यदृष्टं दृश्यते स्वप्नेऽननुभूतं कदापि न' इति न्यायेन जन्मान्तरस्थानान्तरानुभूतं समुत्पन्नसंस्कारमस्मिञ्जन्मन्यदृष्टमप्यर्थं धर्माधर्मावेव दर्शयत इति भावः । चित्रादौ नलदर्शने सत्यपि साक्षात्तद्दर्शनाभावाददृष्टत्वोक्तिर्युक्ता । 'साक्षाच्चित्रे तथा स्वप्ने तस्य स्याद्दर्शनं त्रिधा' इति । अत्र तूत्तरं प्रकारद्वयम् ॥ ३९ ॥

**निमीलितादक्षियुगाच्च निद्रया हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् ।**
**अदर्शि संगोप्य कदाप्यवीक्षितो रहस्यमस्याः स महन्महीपतिः ४०**

**निमीलितादिति** ॥ निद्रयैव सुषुप्त्यैव स महीपतिर्नलोऽस्या भैम्या महद्रहस्यमदर्शि दर्शितः । किंभूतः—कदापि जाग्रत्स्वप्नावस्थयोरपि एवंरूपत्वेनावीक्षितोऽदृष्टः । किं कृत्वा—निमीलितान्मुद्रितादक्षियुगान्नेत्रद्वयात्संगोप्य संयम्य गोपयित्वा । तथा, बाह्येन्द्रियमौनमुद्रिताद्बाह्येन्द्रियस्य चक्षुरिन्द्रियस्यैव मौनेन स्वविषयग्रहणाभावेन

---

१ 'अत्र चिन्ताव्यभिचारिभावस्योदयः भावोदयालंकारः' इति **साहित्यविद्याधरी** ।

२ 'छेकानुप्रासहेत्वलंकारः' इति **साहित्यविद्याधरी** । 'सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः' इति **जीवातुः** ।

मुद्रितात्द्रूपलक्षणस्वविषयग्रहणेऽशक्ताद्रूदोऽपि मनसोऽपि संगोप्य । अक्षियुगमनसोरपि ज्ञातुमदत्त्वापीति यावत् । चशब्दापिशब्दावन्योन्यसमुच्चये । महारहस्यत्वेन निरतिशयानन्दरूपत्वेन निद्रया भैम्यै साक्षात्प्रदर्शित इत्यर्थः । ननु सुषुप्तौ मनसोऽप्यव्यापारश्चेत्तर्हि ज्ञानं कथम् । उच्यते—स्वप्नार्थानां बाह्येन्द्रियग्राह्यत्वाभावाद्ग्राह्यत्वाभावे सुखादिष्वन्तर्भावादभावादाभ्यन्तरत्वाभावेऽप्यदृष्टसहकृतकेवलाविद्यावृत्तिरूपसुषुप्तिविषयत्वस्य युक्तत्वात्, आत्मन एव तत्रादृष्टत्वाच्च । आत्मरूपेण नित्यस्फुरणोपपत्तेः । यद्वा,—नल एव भैम्या अनुरक्तत्वात्तत्प्राप्तिं विना विषयमात्रस्यापि विरागसंभवात्सुखासंभवात्, बोधानन्तरं च 'सुखमहमस्वाप्सं न किंचिदवेदिषम्' इत्यनुसंधानस्य सद्भावान्नलविषयत्वमन्तरेणैवमनुसंधानस्यायुक्तत्वात्, सुषुप्त्यवस्थावशात् स नल एव मम निरतिशयानन्दात्मरूपत्वेन स्फुरित इति बोधानन्तरं तया ज्ञातमिति भावः । इति यथाकथंचित्सुषुप्त्यवस्था व्याख्येया । एवं यथाक्रमं श्लोकत्रयेणावस्थात्रयेऽपि नलसाक्षात्कारो वर्णितः । बालत्वादतिगूढत्वान्नलविषयोऽनुरागः केनापि न ज्ञात इति तस्य महारहस्यत्वम् ॥

**व्याख्यानान्तरं च**—पूर्वस्मिञ्श्लोके स्वप्नावस्थोक्ता । 'मनोरथेन–' (नै० १।३९) 'इति श्लोकेन मनोरथेन नलः पतिः कृतः तत्रैव स्वप्नावस्थायां दृष्टं नलं प्रति स्वयमेवाह—**निमीलितादिति** । हे नल, स प्रसिद्धस्त्वं पतिः स्या भव (इति प्रार्थनायां लिङ्) । (अर्थान्मम) । प्रसिद्धस्तु पुराणादौ भैमीपतिर्नल एव, नत्विन्द्रादय इतीन्द्रादिपरित्यागेन तस्यैव प्रार्थनायां संबोधनैर्हेतुमाह—यतः हे अक्षियुगात्, अक्षो बिभीतको निवासोऽस्यास्तीत्यक्षी, अक्षि च तद्युगं च-कलियुगं तस्मादपि बाह्य भिन्न । चोऽप्यर्थे । किंभूतादक्षियुगात्—निद्रया निद्राजन्येनाज्ञानेन मीलितात्तिरोहितात् । व्याप्तादित्यर्थः । तथा, अहृदः अज्ञानिनो जडात् । मूर्खादित्यर्थः । तस्मादपि बाह्य भिन्न । किंभूतादहृदः—इन्द्रियस्य वाग्रूपस्य मौनं व्यापाराभावः तदेव मुद्रा स्वभावो यस्य । परस्तुतौ मूकादित्यर्थः । तल्लक्षणं माघे ( १६।२९ )—'सहजान्धदृशः स्वदुर्नये परदोषेक्षणदिव्यचक्षुषः । स्वगुणोच्चगिरो मुनिव्रताः परवर्णग्रहणेष्वसाधवः ॥' इति । तथा हे रहस्यम, रहस्या अत्यन्तगोप्या मा लक्ष्मीर्यस्य । तथा हे महन् मानार्ह । एतेषु संबोधनेषु पदत्रयं हेतुर्यथायथं योज्यम् । किंभूतस्त्वम्—अदर्शिसङ्गः अं विष्णुं पश्यन्तीत्येवंशीला अदर्शिनो विष्णुभक्तास्तैः सह सङ्गो मैत्री यस्य । पुनः किंभूतः—अकदाप्यवीक्षितः, न कम् अकं दुःखं दापयन्तीत्येवंशीला अकदापिनः स्वयं दुःखं ददति दापयन्ति चेत्येवंशीला दुष्टास्तैरकदापिभिः । अवीक्षितो न दृष्टः । तत्सङ्गादिरहित इत्यर्थः । अत एव मही सर्वदोत्सववान् । स्याः इति मध्यमपुरुषसामर्थ्यात्सा भैमी ( प्रार्थयित्री ) इति ज्ञातव्यम् । यद्वा,—कश्चन कस्मैचिदाशिषं ददत्प्रार्थयते स त्वं महीपती राजा स्या भव इति प्रार्थनायां लिङ् । यद्वा,—राजानं प्रार्थयते महीपतिस्त्वं प्रसिद्धः स्याः । अन्यत्पूर्ववत् । दमयन्तीसंबोधनपदानि समानार्थानि ज्ञातव्यानीत्यलम् ॥ ४० ॥

**अहो अहोभिर्महिमा हिमागमेऽप्यभिप्रपेदे प्रति तां स्मरार्दिताम् ।**
**तपर्तुपूर्तावपि मेदसां भरा विभावरीभिर्बिभरांबभूविरे ॥ ४१ ॥**

**अहो इति** ॥ अहोभिर्दिवसैः कर्तृभिः हिमागमे हेमन्तर्तावपि स्मरार्दितां

१ 'अत्र रूपकमलंकारः' इति साहित्यविद्याधरी ।

मदनपीडितां तां भैमीं प्रति लक्ष्यीकृत्य महिमा दैर्घ्यं प्रपेदे प्राप्तम्। विभावरीभी रात्रिभिः तपर्तुपूर्तावपि निदाघर्तुभरेऽपि मेदसां भरा मज्जबाहुल्यं (लक्षणया) स्थूलत्वं बिभरांबभूविरे धृतम्। हेमन्ततौ दिनानि ह्रस्वानि, रात्रयो महत्यः। ग्रीष्मेऽपि दिनानि महान्ति, रात्रयोऽल्पाः। विरहित्वादतिवाहयितुमशक्यत्वात्तां प्रति विपरीता जाता इत्यर्थः। अहो विचित्रमित्यर्थः। अहो इत्योदन्तत्वात्प्रगृह्यत्वम्। बिभरामित्यत्र 'भीह्री-' (६।१।१९२) इत्याम् श्लुवच्च ॥ ४१ ॥

इदानीं नलस्यापि तस्यामनुरागमाह—

**[1]स्वकान्तिकीर्तिव्रजमौक्तिकस्रजः श्रयन्तमन्तर्घटनागुणश्रियम्।**
**कदाचिदस्या युवधैर्यलोपिनं नलोऽपि लोकादशृणोद्गुणोत्करम् ४२**

**स्वकान्तीति**। कदाचित् कस्मिंश्चित्समये नलोऽपि लोकाल्लोकमुखादस्या भैम्या गुणोत्करं सौन्दर्यादिगुणसमूहमश्रृणोत्। किंभूतं गुणोत्करम्—युवधैर्यलोपिनं तरुणधैर्यलोपनशीलम्। तथा,—स्वस्या भैम्याः कान्तिकीर्तिव्रजः सौन्दर्यविषयो यो यशःसमूहः स एव शुभ्रत्वान्मौक्तिकमाला तस्या अन्तर्घटना नलस्य मनसि या घटना संबन्धस्तस्यै गुणश्रियं दोरकशोभां श्रयन्तं कुर्वाणम्। गुणोत्करेण नलचेतसि तत्कान्तिकीर्तिर्गुम्फितेत्यर्थः। मालाया अन्तर्घटनार्थं दोरको भवति। यद्वा,—स्वस्य नलस्य। तद्योगे नलरामणीयकानुरूपो भैमीगुणसमूह इति भावः। मौक्तिकमिति विनयादित्वात्स्वार्थे ठक्। लोकादिति हेतौ पञ्चमी ॥ ४२ ॥

**तमेव लब्ध्वावसरं ततः स्मरः शरीरशोभाजयजातमत्सरः।**
**अमोघशक्त्या निजयेव मूर्तया तया विनिर्जेतुमियेष नैषधम् ॥४३॥**

**[2]तमेवेति**॥ ततो भैमीगुणश्रवणानन्तरं स्मरः कामस्तमेवावसरं प्रस्तावं लब्ध्वा तया भैम्या कृत्वा नैषधं नलं विनिर्जेतुं पराभवितुमियेष ऐच्छत्। उत्प्रेक्षते—मूर्तया शरीरिण्या निजया स्वकीययाऽमोघशक्त्येव। यतः स्वशरीरस्य या शोभा तस्या जयस्तेन जातो मत्सरः क्रोधो यस्येति पराजयेच्छायाः कारणम्। जातक्रोधो वैरी कमप्यवसरं प्राप्य शक्त्यायुधः सन् वैरिणं पराजेतुं प्रक्रमते। शोभेति भिदादिगणे निपातनात्साधुः ॥ ४३ ॥

**[3]अकारि तेन श्रवणातिथिर्गुणः क्षमाभुजा भीमनृपात्मजालयः।**
**तदुग्रधैर्यव्ययसंहितेषुणा स्मरेण च स्वात्मशरासनाश्रयः ॥ ४४ ॥**

**अकारीति**॥ तेन क्षमाभुजा राज्ञा नलेन भीमनृपात्मजालयः भीमनृपकन्या आलयः स्थानमाश्रयो यस्य एवंभूतो गुणः सौन्दर्यादिः श्रवणातिथिः श्रवणगोचरोऽकारि कृतः। आकर्णित इत्यर्थः। आदरातिशयापूर्वत्वसूचनाय 'अतिथि'पदम्।

---

१ 'अत्र हिमागमे कारणे सत्यपि दिनानां लघुत्वं कार्यं नोक्तम्। तथा ग्रीष्मे कारणे सत्यपि रात्रीणां लघुता नोक्ता इति विशेषोक्तिरलंकारः। दिनरात्रिमहत्त्वे स्मरार्दितत्वं कारणमस्ति तेन विभावना। छेकानुप्रासोऽपि' इति साहित्यविद्याधरी। २ 'अत्र कीर्तिव्रजगुणोत्करयोर्मुक्ताहारगुम्फनसूत्रत्वरूपणाद्रूपकालंकारः' इति जीवातुः। ३ 'अत्रोत्प्रेक्षालंकारः' इति साहित्यविद्याधरी। ४ 'भीमनृपात्मजाश्रयः' इति मल्लि० संमतः पाठः।

स्मरेणापि गुणः प्रत्यञ्चा स्वात्मशरासनाश्रयः स्वात्मनो यच्छरासनं धनुस्तदाश्रय आधारः स्थानं यस्यैवंभूतोऽकारि । किंभूतेन—तस्य नलस्योच्चमुत्कृष्टं धैर्यं तस्य व्ययो नाशस्तस्मै संहितो धनुष्यारोपित इषुर्येन । यदैव भैमीगुणश्रवणं जातं तदैव तस्य मदनपीडा जातेति भावः । 'चः' तुल्यकालद्योतनार्थे वा । शोभनं दृढं यदात्मशरासनमिति वा ॥ ४४ ॥

**अमुष्य धीरस्य जयाय साहसी तदा खलु ज्यां विशिखैः सनाथयन् ।**
**निमज्जयामास यशांसि संशये स्मरस्त्रिलोकीविजयार्जितान्यपि ॥४५॥**

**अमुष्येति** ॥ स्मरः त्रयाणां लोकानां समाहारस्त्रिलोकी, तस्या विजयेनार्जितानि संपादितान्यपि यशांसि कीर्तीः संशये संदेहे निमज्जयामास । 'खलु' संभावनायाम् । त्रैलोक्ये जितेऽपि यद्येनं जेतुं न शक्ष्यामि तर्ह्येकस्याजये सर्वापि कीर्तिर्गमिष्यतीति शक्ष्यामि न वेति संदेहः । किंभूतः स्मरः—तदा धीरस्यामुष्य नलस्य जयाय विशिखैर्बाणैः ज्यां सनाथयन् सनाथां कुर्वन् । योजयन्नित्यर्थः । यतः साहसी हिताहितानपेक्षं यत्कर्म तत्साहसं तद्वान् । अविमृश्यकारीत्यर्थः । विशिखैरिति धीरस्यैकेन जेतुमशक्यत्वाद्बहुत्वम् । त्रैलोक्यापेक्षयाऽस्यातिधीरत्वमुक्तम् । **'विजयोर्जितानि'** इति पाठः साधीयान् । जयायेति 'तुमर्थात्—' ( २।३।१५ ) इति चतुर्थी । निमज्जयामासेति मस्जेः सकारस्य 'झलां जश् झशि' ( ८।४।५३ ) इति यो दकारस्तस्य'-मृज्जतीनाम्'—इति निर्देशाच्चुत्वम् ॥ ४५ ॥

**अनेन भैमीं घटयिष्यतस्तथा विधेरवन्ध्येच्छतया व्यलासि तत् ।**
**अभेदि तत्तादृगनङ्गमार्गणैर्यदस्य पौष्पैरपि धैर्यकञ्चुकम् ॥ ४६ ॥**

**अनेनेति** ॥ अस्य नलस्य तत् प्रसिद्धं तादृग्दुर्भेद्यमपि धैर्यमेव कञ्चुकं पौष्पैः पुष्परूपैरप्यनङ्गमार्गणैः कामबाणैर्यस्मादभेदि विदारितम्, तत्तस्मात् तथा वक्ष्यमाणभैम्यभिलाषीन्द्रादिपरित्याजनप्रकारेण अनेन नलेन भैमीं घटयिष्यतः संगमयिष्यतो विधेर्ब्रह्मणोऽवन्ध्येच्छतया अवन्ध्या सफला इच्छा मनोरथो यस्य तस्य भावस्तत्ता सफलेच्छता तया व्यलासि विलासितमिति वितर्कः । तत्तादृगनङ्गमार्गणैरित्येकं वा पदम् । तैः पञ्चसंख्यतया प्रसिद्धैरल्पैस्तादृग्भिश्चातिमृदुश्लक्ष्णैः कामबाणैरिति । अङ्गरहितस्यापि पुष्परूपैर्बाणैर्धैर्यकञ्चुकस्यामूर्तस्यापि वस्तुनो यद्विदारणं तद्ब्रह्मसफलेच्छाया एव विलास इति, यत्तदोः क्रियाविशेषणत्वं वा । असंभावितमपि विधीष्टं भवत्येवेति भावः । व्यलासीति भावे चिण् । अभेदीति कर्मणि कर्मकर्तरि वा चिण् । पौष्पैः । भेदविवक्षायां संबन्धेऽण् । स्वार्थे वा ॥ ४६ ॥

---

१ 'अत्र स्वात्मशरासनाश्रय इति पुनरुक्ताभासोऽलंकारः । तुल्ययोगितालंकारोऽपि' इति साहित्यविद्याधरी । 'अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यहेतुत्ववाक्यार्थहेतुकं काव्यलिङ्गमलंकारः' इति जीवातुः । २ 'शरासनज्याम्' इति मल्लि० सं० पाठः । ३ 'अत्र स्मरस्योक्तसंशयासंबन्धेऽपि तत्संबन्धकथनादतिशयोक्तिरलंकारः' इति जीवातुः । ४ 'कञ्चुकं भिन्नमिति विरोधः, तस्य विधिविलासेनाभासीकरणाद्विरोधाभासोऽलंकारः । स च धैर्यकञ्चुकमिति रूपकोत्थापित इति तयोरङ्गाङ्गिभावेन संकरः' इति जीवातुः । 'अत्रानुमानविरोधावलंकारौ' इति साहित्यविद्याधरी ।

धैर्यभङ्गमेवाह—

**किमन्यदद्यापि यदस्त्रतापितः पितामहो वारिजमाश्रयत्यहो ।**
**स्मरं तनुच्छायतया तमात्मनः शशाक शङ्के स न लङ्घितुं नलः ॥४७॥**

**किमन्यदिति** ॥ यस्य कामस्यास्त्रैर्बाणैस्तापितः पितामहो ब्रह्माऽद्यापि वारिजं कमलमाश्रयति । 'अहो' आश्चर्ये । वृद्धोऽपि ब्रह्मा कामसंतप्तः । यः स्वपितामहमप्यतिवृद्धमतिपूज्यं शस्त्रैः पीडयतीति सोऽन्यं पीडयतीति किं वाच्यम् । स्वभावसिद्धं कमलासनत्वं कामसंतप्तत्वेनोत्प्रेक्षितम् । लुप्तोत्प्रेक्षा । संतप्ताः शीतलमाश्रयन्ते । अत एव 'वारिज'पदम् । अन्यत्कामस्य किं वर्णनीयं तत्राह—शङ्के इति । नल आत्मनः स्वस्य तनुच्छायतया शरीरसाम्येनेव । यद्वा,—तन्वी छाया शोभा यस्य तस्य भावस्तत्ता तया विरहव्यथाजनितम्लानशोभतया तं स्मरं लङ्घितुं जेतुं न शशाक । यद्वा,—आत्मनः सकाशात् कामस्य तनुच्छायतयाल्पशोभत्वेन जेतुं नाशकत्, अपि तु शशाकैव । तस्याल्पकान्तित्वमात्मनोऽधिककान्तित्वमेव जय इत्यर्थः । पूर्वं तस्यातिशयितं धैर्यं वर्णयित्वा तन्नाशकथनं विप्रलम्भपोषार्थम् । लङ्घितुमिति शकियोगे तुमुन्[1] ॥ ४७ ॥

**उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयस्कृतेन किम् ।**
**त्रपासरिद्दुर्गमपि प्रतीर्य सा नलस्य तन्वी हृदयं विवेश यत् ॥ ४८ ॥**

**उर इति** ॥ सा तन्वी कृशाङ्गी (स्वीया) त्रपैव सरिन्नदी तस्या दुर्गं प्राकारमपि, त्रपासरिदेव दुर्गं वा । प्रतीर्य तीर्त्वा नलस्य हृदयं यद्विवेश प्रविष्टा । यद्वा,—नलस्यैव त्रपासरिद् दुर्गम् । तदुरोभुवा वक्षस्थलगेन कुम्भयुजेन कुचकलशयुगेन जृम्भितं विलसितम् । 'किम्' उत्प्रेक्षायाम् । किंभूतेन—नवोपहारेण नवो नूतन उप समीपगतो हारो मुक्ताहारो यस्य, उपहार उपायनं तद्रूपेण वा । वयसा यौवनेन कृतं वयस्कृतं तेन । तेन लज्जां त्यक्त्वा संपन्नयौवना भैमी ध्याता इत्यर्थः । अन्यापि कुम्भकारकृतमुपढौकितं कुम्भद्वयं वक्षसि निधाय जलदुर्गं तीर्त्वा प्रियसंकेतं गच्छति । 'यत्'शब्दोऽप्यर्थः । सा तन्व्यप्युरोभुवा कुम्भयुगेन त्रपासरिद्दुर्गमपि प्रतीर्य नलस्य हृदयमपि विवेश, किमिति वितर्क इति वाऽन्वयः । किंभूतं दुर्गम्—जृम्भितम् । अत्युच्चमित्यर्थः । अन्यत्पूर्ववत् । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । उरोभुवा इति भाषितपुंस्कत्वेन नुमभावः । कुम्भयुगेनेति कर्तरि तृतीया[2] ॥ ४८ ॥

**अपह्नुवानस्य जनाय यन्निजामधीरतामस्य कृतं मनोभुवा ।**
**अबोधि तज्जागरदुःखसाक्षिणी निशा च शय्या च शशाङ्ककोमला ४९**

**अपेति** ॥ मनोभुवा कामेनास्य नलस्य यद् अनिर्वाच्यं कृतम् । तत् निशा

---

१ 'अत्र स्मरलङ्घने पितामहोऽप्यशक्तः, किमुत नल इत्यर्थापत्तिस्तावदेकोऽलंकारः । तनोश्छायेव छाया इत्युपमा । छाययोरभेदाध्यवसायादतिशयोक्तिः । अलङ्घ्यत्वे तनुच्छायताया हेतुत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा । सा च शङ्के इति व्यञ्जकप्रयोगाद्वाच्या' इति **जीवातुः** । 'अत्रातिशयोक्तिरुत्प्रेक्षा श्लेषश्चालंकारः' इति **साहित्यविद्याधरी** । २ 'अत्रोत्प्रेक्षा रूपकं श्लेषश्चालंकारः' इति **साहित्यविद्याधरी** । 'अत्र विषयनिगरणादभेदाध्यवसायादतिशयोक्तिः जृम्भणं किमित्युत्प्रेक्षा । सा चोक्तातिशयोक्तिमूला इति संकरः' इति **जीवातुः** ।

रात्रिः शय्या प्रस्तरणं चाबोधि जानाति स्म। किंभूतस्यास्य—जनाय लोकाय निजां स्वकीयामधीरतामधैर्यमपह्नुवानस्य गोपायतः । किंभूता निशा शय्या च—यतो जागरदुःखं साक्षाद्वीक्षते सा। विदुषीत्यर्थः। तज्जागर इत्येकं पदं वा। तथा, शशाङ्क-कोमला चन्द्रेण मनोहरा। शशस्य मृगविशेषस्याङ्क उत्सङ्गस्तद्वन्मृद्वी । चन्द्रवन्म-नोहरा वा। चन्द्रेण कर्पूरप्रक्षेपेण मनोहरा वा। चान्द्री रात्रिरतिदुःसहत्वाज्जागर-दुःखसाक्षिणी शय्या चात्मनि विलुण्ठनेन। रात्रिशय्याव्यतिरेकेण केनचित्तद्विरह-दुःखं न ज्ञातमिति भावः। जनायेति 'श्लाघह्नुङ्—' ( १।४।३४ ) इति संप्रदान-त्वम्। अबोधीति 'दीपजन–' ( ३।१।६१ ) इति कर्तरि चिण्। निशा इति हल-न्ताद्वा टाप् । शय्या इति 'संज्ञायां समजनि–' ( ३।३।९९ ) इति क्यपि 'अयङ् यि—' ( ७।२।२२ ) इत्ययङ् ॥ ४९ ॥

**स्मरोपतप्तोऽपि भृशं न स प्रभुर्विदर्भराजं तनयामयाचत।**
**त्यजन्त्यसूञ्शर्म च मानिनोवरं त्यजन्ति न त्वेकमयाचितव्रतम् ॥५०॥**

**स्मरेति** ॥ भृशं स्मरोपतप्तोऽप्यतिशयेन कामपीडितोऽपि स नलो विदर्भराजं विद-र्भदेशाधिपं भीमं तनयां कन्यां नायाचत। यतः,–प्रभुः समर्थः। अभिमानीति यावत्। कामपीडितः स कथं न याचितवानित्यत आह—मानिनोऽभिमानिनः पुरुषाः शर्म सुखं, तथा असूंश्च प्राणानपि त्यजन्ति। एतद्द्वयं तेषां वरमल्पमिष्टम्। एकमद्वितीयं प्रधानमयाचितव्रतम्। अयाचनरूपं व्रतं नैव त्यजन्तीत्यर्थः। एतदवरं न विद्यते वरं श्रेष्ठं यस्मात्। अतिश्रेष्ठमित्यर्थः। पाठक्रमादर्थक्रमस्य बलीयस्त्वात् 'शर्म'पदस्य पूर्व-मन्वयः। यद्वा,—चकारस्तुल्यकालद्योतनार्थः। शर्म यथा भवति तथाऽसूनपि त्यजन्ति। सुखेन त्यजन्तीत्यर्थः। वरं श्रेष्ठमिति व्रतविशेषणं वा। विदर्भराजेति 'राजाहः—' ( ५।४।९१ ) इति टच्। याचिर्द्विकर्मकः । 'दैवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मना-क्प्रिये' इत्यमरः ॥ ५० ॥

**मृषाविषादाभिनयादयं क्वचिज्जुगोप निःश्वाससततिं वियोगजाम्।**
**विलेपनस्याधिकचन्द्रभागताविभावनाच्चापललाप पाण्डुताम् ॥ ५१ ॥**

**मृषेति** ॥ अयं नलः क्वचित्कस्मिंश्चिद्वस्तुनि विषये मृषाविषादाभिनयात् 'तद्वस्तु गतम्' इति मिथ्याखेदप्रकटनाद्वियोगजां विरहजनितां निःश्वासततिं निःश्वासपरम्परां जुगोप तिरोधत्ते स्म । तथा,—विलेपनस्य चन्दनस्याधिकश्चन्द्रभागः कर्पूरांशो यस्मिंस्तस्य भावस्तत्ता, तस्या विभावनाज्ज्ञापनात्प्रकटीकरणाद्वियोगजां पाण्डुतां चाप-ललाप। अद्य चन्दनमध्ये कर्पूरोऽधिको जातस्तेनाङ्गपाण्डुत्वं न त्वन्यत्कारणम्। विष-मत्तीति विषादः शिवः तस्याभिनयाद्, निःश्वासानुपदं शिवशिवेति नामोच्चारणाद्वा जुगोप। 'घनसारश्चन्द्रसंज्ञः कर्पूरः' इत्यमरः ॥ ५१ ॥

---

१ 'एतेन नायकस्य लज्जागुणोऽभिहितः। श्लेषालंकारः' इति **साहित्यविद्याधरी**।
२ 'अर्थान्तरन्यासोऽलंकारः' । तथा च **काव्यप्रकाशः**—'सामान्यं वा विशेषो वा तदन्येन समर्थ्यते । यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥' इति **साहित्य-विद्याधरी**। ३ 'अत्र व्याजोक्तिरलंकारः । यथाह **काव्यप्रकाशः**—व्याजोक्तिश्छद्मनो भिन्नवस्तुरूपनिगूहनम्' इति **साहित्यविद्याधरी**। 'अत्राङ्गगताभ्यां मृषाविषादचन्द्रभाग-पाण्डिमभ्यां तद्विरहश्वासपाण्डिम्नोर्निगूहनान्मीलनालंकारः—"मीलनं वस्तुना यत्र वस्त्व-न्तरनिगूहनम्" इति लक्षणात्' इति **जीवातुः**।

**शशाक निह्नोतुमयेन तत्प्रियामयं बभाषे यदलीकवीक्षिताम् ।**
**समाज एवालपितासु वैणिकैर्मुमूर्च्छ यत्पञ्चमर्च्छनासु च ॥ ५२ ॥**

**शशाकेति** ॥ अयं नलोऽलीकवीक्षितां मोहेन मिथ्यैव वीक्षितां प्रियां भैमीं प्रति यत्किंचिद्बभाषे, तदयेन दैवेन निह्नोतुं गोपायितुं शशाक । वैणिकैर्वीणावादनकुशलैः पञ्चमरागस्य मूर्च्छनास्वालपितासु पुनःपुनर्गीतासु सतीषु समाज एव सभायामेव यन्मुमूर्च्छ, तदपि अयेन रागमूर्च्छनाजनितसुखानुभवव्याजेन निह्नोतुं शशाक । मूर्च्छाप्यपलपितेत्यर्थः । सप्तानां स्वराणामारोहावरोहौ मूर्च्छनाः । तास्त्वेकविंशतिः । अथ च प्रियां प्रति 'अये भैमी' इति समाजे बभाषे तद् निह्नोतुं न शशाक इति काकुः । शशाकैव । शब्दान्तरान्तर्भूतत्वाद्वचनमपलपितम् । यद्वा,—वैणिकैः पञ्चमरागमूर्च्छनासु गातुं प्रारब्धासु समाज एव सभैव मुमूर्च्छ । येन नलकृतभैमीसंबोधनमाकर्णनीयं स समाज एव मूर्च्छां प्राप । यद्वा,—यत्किंचिद्बभाषे, तद् अये कामाय निह्नोतुं न शशाक, समाजाय त्वपलपितुं समर्थोऽभूत् । यतः समाज एव मुमूर्च्छ । इः कामः तस्मै कामाय । 'अये क्रोधे विषादे च संभ्रमे स्मरणेऽपि च', 'इः कामे परुषोक्तौ च' इति विश्वः । 'अयः शुभावहो विधिः', 'वीणावादस्तु वैणिकः' इत्यमरः । रागप्रकटीकरणमालपितम् । पशुव्यतिरिक्तसमूहवाचित्वात्समाज इत्यत्र घञ् । वैणिकैरिति 'शिल्पम्' ( ४।४।५५ ) इति ठक् । मूर्च्छोन्मादावुक्तौ[2] ॥ ५२ ॥

**अवाप सापत्रपतां स भूपतिर्जितेन्द्रियाणां धुरि कीर्तितस्थितिः ।**
**असंवरे शंबरवैरिविक्रमे क्रमेण तत्र स्फुटतामुपेयुषि ॥ ५३ ॥**

**अवापेति** ॥ स भूपतिः सापत्रपतामवाप । अन्यतो लज्जापत्रपा तया सह वर्तमानः सापत्रपः तस्य भावस्तत्ता तां प्राप । किंभूतः—यतो जितेन्द्रियाणां मध्ये धुर्यग्रे प्रथमतः कीर्तिता स्तुता स्थितिर्मर्यादा यस्य । विरहव्यथा लोकेनापि ज्ञातेति सलज्जोऽभूदित्यर्थः । कस्मिन्सति—तत्र समाजे सभामध्येऽसंवरे निरोद्धुमशक्येऽगोप्ये शंबरवैरी कामस्तस्य विक्रमे क्रमेण परिपाट्या स्फुटतां प्राकट्यमुपेयुषि प्राप्ते सति । असंवरे इत्यत्र 'ग्रहवृदृनिश्चि—' ( ३।३।५८ ) इत्यप्[3] ॥ ५३ ॥

**अलं नलं रोद्धुममी किलाभवन्गुणा विवेकप्रमुखा[4] न चापलम् ।**
**स्मरः स[5] रत्यामनिरुद्धमेव यत्सृजत्ययं सर्गनिसर्ग ईदृशः ॥ ५४ ॥**

**अलमिति** ॥ अमी विवेकप्रमुखा विवेकादयो गुणा नलमिदं पूर्वोक्तं चापलं रोद्धुमावरितुमलं समर्था नाभवन् । नलस्य चापलं रोद्धुं न समर्था इत्यर्थः । किल निश्चयेन । यद्यतः स प्रसिद्धः स्मरो रत्यामनुरागे सति पुरुषमनिरुद्धमेव चपलमेव सृजति करोति । अयमेतादृक्सर्गनिसर्गः सृष्टिनिर्णयः स्वभावो वा । अयमेव निश्चय इत्यर्थः । अनुरागे सति सर्वोऽपि चञ्चलो भवतीत्यर्थः । विवेकस्यापि किमपि न चलतीत्यर्थः । यद्वा,—स्मरो रत्यां संभोगेऽनिरुद्धं निवारयितुमशक्यं चापलमि-

---

१ '°मूर्च्छनास्वपि' इति मल्लि० । 'क्रमात् स्वराणां सप्तानामारोहश्चावरोहणम् । मूर्च्छनेत्युच्यते', 'रागव्यञ्जनमालापः' इति मूर्च्छनाऽऽलापलक्षणे । २ 'एतेन ह्रीत्यागोन्मादमूर्च्छावस्थाः सूचिताः' इति जीवातुः । ३ 'छेकानुप्रासोऽलंकारः' इति साहित्यविद्याधरी । ४ '°प्रभवा' इति मल्लि० । ५ 'स' इति मल्लि० ।

त्यर्थः । अयमीदृशः कामेन सृज्यमानस्य प्रस्तुतत्वाच्चापलस्य स्वभावः । अथ च— मदनः प्रद्युम्नाख्यो रत्यां स्वप्रियायामनिरुद्धनामानमेव पुत्रं जनयतीति यत्, अयमीदृशोऽनादिः सर्गस्वभावः । हेयोपादेयविचारो विवेकः । नलमिति षष्ठ्यर्थे सप्तम्यर्थे वा द्वितीया, रुधेर्द्विकर्मकत्वात् । 'स्वभावश्च निसर्गश्च' इत्यमरः । रोद्धुमित्यलंयोगे 'पर्याप्तिवचनेषु—' ( ३।४।६६ ) इति तुमुन् ॥ ५४ ॥

**अनङ्गचिह्नं स विना शशाक नो यदासितुं संसदि यत्नवानपि ।**
**क्षणं तदारामविहारकैतवान्निषेवितुं देशमियेष निर्जनम् ॥ ५५ ॥**

**अनङ्गेति** ॥ स नलो यदा यस्मिन्समये विरहचिह्नापलापविषये यत्नवानपि सन् संसदि सभायामनङ्गचिह्नं पाण्डुत्वकृशत्वगोत्रस्खलनादि कामचिह्नं विना क्षणमप्यासितुं स्थातुं नो शशाक न समर्थोऽभूत् तदा तस्मिन्समये आराम उपवने विहारः क्रीडा तस्याः कैतवाद्व्याजेन निर्जनं देशमुद्यानदेशं निषेवितुं सेवितुमियेष ऐच्छत् । क्षणमुत्सवरूपं, निर्जनत्वाद्देशविशेषणं वा । यत्तदिति कारणार्थे वा । 'कालविशेषोत्सवयोः क्षणः' इत्यमरः । चिह्नमिति 'पृथग्विना—' ( २।३।३२ ) इति द्वितीया । क्षणमिति पक्षे 'कालाध्वनोः—' ( २।३।५ ) इति द्वितीया[3] ॥ ५५ ॥

**अथ श्रिया भर्त्सितमत्स्यलाञ्छनः समं वयस्यैः स्वरहस्यवेदिभिः ।**
**पुरोपकण्ठोपवनं[4] किलेक्षिता दिदेश यानाय निदेशकारिणः ॥ ५६ ॥**

**अथेति** ॥ अथानन्तरं स नलो यानाय यानमानेतुं निदेशकारिणो भृत्यान् दिदेशाज्ञापयामास । किंभूतः—विरहव्यथाव्यथितोऽपि श्रिया कान्त्या सुरूपत्वाद्भर्त्सितस्तिरस्कृतो मत्स्यलाञ्छनः कामो येन । विरहव्यथागोपनार्थमङ्गीकृतशोभत्वाद्वा जितकामः । तथा, स्वरहस्यवेदिभिः स्वाम्यभिप्रायज्ञैर्द्वित्रैर्वयस्यैः सखिभिः समं सह पुरोपकण्ठोपवनं नगरनिकटस्थमुद्यानम् । 'किल' इत्यलीकम् । ईक्षिता ईक्षमाणः । कामचिह्नापह्नवे तात्पर्यं, न तु वनविलोकन इति किलेत्युक्तम् । उपकण्ठम् । सामीप्येऽव्ययीभावः । 'पूरणगुण—' ( २।२।११ ) इत्यव्ययेन सह समासनिषेधात्पुरमुपकण्ठं यस्येति बहुव्रीहिः । केचिदस्मिन्सूत्रे पूर्वोत्तरसाहचर्यात्कृतव्ययस्यैवायं निषेधो, न त्वव्ययमात्रस्येत्याहुः । तन्मते पुरस्योपकण्ठमिति षष्ठीतत्पुरुषोऽपि । वनम्, तृना योगे षष्ठ्यभावः । यानायेति 'क्रियार्थोपपदस्य—' ( २।३।१४ ) इति चतुर्थी ॥ ५६ ॥

**अमी ततस्तस्य विभूषितं सितं जवेऽपि मानेऽपि च पौरुषाधिकम् ।**
**उपाहरन्नश्वमजस्रचञ्चलैः खुराञ्चलैः क्षोदित[6]मन्दुरोदरम् ॥ ५७ ॥**

**अमी इति** ॥ ततस्तदाज्ञानन्तरममी भृत्यास्तस्य नलस्याश्वमुपाहरन्नानिन्युः[5]

---

१ 'अत्र स्मररागदुर्वारतायाः सर्वसृष्टिसाधारण्येन नलचापलदुर्वारत्वसमर्थनात्सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः' इति **जीवातुः** । 'अत्रोत्प्रेक्षाहेत्वलंकारौ' इति **साहित्यविद्याधरी** । २ 'नैषधः' इति पाठस्तिलकसुखावबोधासाहित्यविद्याधरीसंमतः । तत्र 'आराम—इत्यादिविशेषणसामर्थ्याद्विजनम्' इति **सुखावबोधा** । ३ 'अत्रापह्नुतिरलंकारः' इति **साहित्यविद्याधरी** । 'एतेन चापलाख्यसंचारिणि भ्रमणलक्षणोऽनुभाव उक्तः' इति **जीवातुः** । ४ 'पुरोपकण्ठं स वनम्' इति पाठः **साहित्यविद्याधरी**संमतः । ५ 'अत्रोपमा सहोक्तिश्चालंकारः' इति **साहित्यविद्याधरी** । ६ 'क्षोभित°' इति पाठः ।

अश्वविशेषणानि—सितं श्वेतम् । विभूषितं विशेषेणालंकृतम् । जवेऽपि वेगेऽपि पौरुषेण बलेनाधिकम् । मानेऽपि परिमाणेऽपि पौरुषं पुरुषप्रमाणं तस्मादधिकम् । अजस्रं चञ्चलैः खुराञ्चलैः खुराग्रैः प्रयोज्यैः क्षोदितं चूर्णीकारितं मन्दुराया वाजिशालाया उदरं मध्यं येन । 'खुरैः खनन्यः पृथिवीमश्वो लोकोत्तरः स्मृतः' इति शालिहोत्रे । विभूषितम् वीनां पक्षिणां भुवि स्थान उषितम् । वेगवशादाक्रमणवशाद्वा गगनगामिनमिति वा । 'सितम्' इत्यनेन कफप्रकृतित्वम् । तेनातिबलवत्त्वसहिष्णुत्वादिलक्षणं सूचितम् । 'ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु', 'वाजिशाला तु मन्दुरा' इत्यमरः । 'पुरुष'शब्दात् पक्षे भावे युवादित्वादण् । परिमाणे 'पुरुषहस्तिभ्यामण च' ( ५।२।३८ ) इत्यण् । क्षोदितमिति हेतुमण्ण्यन्तान्निष्ठा । कर्तरि च तृतीया, करणे वा ॥ ५७ ॥

(इतः सप्तभिः कुलकम्—)

**अथान्तरेणावटुगामिनाध्वना निशीथिनीनाथमहःसहोदरैः ।**
**निगालगाद्देवमणेरिवोत्थितैर्विराजितं केसरकेशरश्मिभिः ॥ ५८ ॥**

**अथेति** ॥ अथानन्तरं स नलः हयमारुरोहेति सप्तमश्लोकेनान्वयः । अश्वविशेषणानि । किंभूतं हयम्—स्कन्धप्ररूढाः केशाः केसरकेशास्तेषां, रश्मिभिः तल्लक्षणैरेव किरणैर्वा विराजितम् । किंभूतैः—निगालगाद् गलप्रदेशे वर्तमानाल्लक्षणभूताद्देवमणेः देवमणिनाम्नो दक्षिणावर्तादवटुगामिना आन्तरेण कण्ठमध्यवर्तिनाध्वना मार्गेणोत्थितैः निःसृतैरिव । तथा,—उज्ज्वलत्वात् निशीथिनी रात्रिस्तस्या नाथश्चन्द्रस्तस्य महांसि किरणास्तेषां सहोदरैः सदृशैः । प्रायेण सहोदराः सरूपा भवन्तीति सारूप्यं लक्ष्यते । अथ च देवमणिः कौस्तुभः, चन्द्रश्च । समुद्रादुत्पन्नत्वादुभयोः सहोदरत्वम्[1] । केसरकेशरश्मिभिरुपलक्षितम् । विराजितं वीनां पक्षिणां राजा विराजो गरुडः तद्वदाचरितम् । 'निगालस्तु गलोद्देशे', 'अवटुर्घाटा कृकाटिका' इत्यमरः । 'देवमणिः शिवेऽश्वस्य कण्ठावर्ते च कौस्तुभे' इति विश्वः । सहोदरैरिति 'वोपसर्जनस्य' (६।३।८२) इति वैकल्पिकत्वात्सादेशाभावः ॥ ५८ ॥

**अजस्रभूमीतटकुट्टनोत्थितैरुपास्यमानं चरणेषु रेणुभिः ।**
**रयप्रकर्षाध्ययनार्थमागतैर्जनस्य चेतोभिरिवाणिमाङ्कितैः[3] ॥ ५९ ॥**

**अजस्रेति** ॥ रेणुभिश्चरणेषूपास्यमानं सेव्यमानम् । किंभूतै रेणुभिः—अजस्रं निरन्तरं भूमीतटकुट्टनं धरातलचूर्णनं तेनोत्थितैः । कैरिव—अणिमा अणुपरिमाणत्वं तेनाङ्कितैर्युक्तैर्जनस्य लोकस्य चेतोभिरिवान्तःकरणैरिव । 'अणुपरिमाणं मनः' इति । किंभूतैश्चेतोभिः—रयप्रकर्षस्य वेगातिशयस्याध्ययनार्थं पठनार्थमागतैः । तद्वेगं प्रेक्षतां लोकानां चेतोभिर्वेगातिशयाध्ययनार्थमागतैरिवेत्युत्प्रेक्षा । इति मनसोऽपि सकाशादश्वस्य वेगातिशयो द्योत्यते । अथ च शिष्यो गुरुचरणयोरुपास्ते । अजस्रभूमीतटकुट्टनमुत्तमाश्वजातिः । भूमीति 'कृदिकारादक्तिनः' ( ग० सू० ५० ) इति ङीष् । अणिमा महिमवत् ॥ ५९ ॥

---

१ 'अत्र पक्षे—'क्षोदितम्' इति 'क्षोदवत्कृतम्' इत्यर्थे 'तत्करोति' (ग. सू. २०४) इति ण्यन्तात् क्तः, मतोर्लोपश्च' इति सुखावबोधा । २ 'अत्रानुप्रासोत्प्रेक्षारूपकाणां संकरः' इति साहित्यविद्याधरी । ३ 'अत्रोत्प्रेक्षा जातिश्चालंकारौ' इति साहित्यविद्याधरी ।

**चलाचलप्रोथतया महीभृते स्ववेगदर्पानिव वक्तुमुत्सुकम् ।**
**अलं गिरा वेद किलायमाशयं स्वयं हयस्येति च मौनमास्थितम् ॥६०॥**

**चलाचलेति** ॥ चलाचलोऽतिचञ्चलः प्रोथ ओष्ठाग्रं नासापुटं वा यस्य तस्य भावस्तत्ता, तया महीभृते नलाय स्वकीयवेगविषये दर्पान्गर्वान्वक्तुमुत्सुकमिवोत्कण्ठितमिव । तर्हि किमिति नोक्तवानित्याशङ्क्याह—'किल' प्रसिद्धौ । अयं नलो हयस्याशयमभिप्रायं स्वयमात्मनैव वेद जानाति किल, अतो गिरा वाचा अलं पूर्यतामिति हेतोरिव मौनमास्थितम् । 'चलाचलप्रोथत्वमश्वजातिः' । ज्ञातुरग्रे स्वयं स्वगुणं वक्तुमनुचितमित्यर्थः । चलाचल इति 'चरिचलिपतिवदीनां द्विर्वचनमाक्चाभ्यासस्य' ( वा० ३४३० ) इति द्वित्वमागागमश्च । 'अभ्यासकार्यमनचि' इति वक्तव्याद्, आगमदीर्घसामर्थ्याद्वा, 'हलादिः शेषः' ( ७।४।६० ) न । महीभृते 'क्रियया यमभिप्रैति सः—' ( वा०१०८५ ) इति संप्रदानत्वम् । गिरेति वारणार्थयोगे तृतीया । वेद इति 'विदो लटो वा' ( ३।४।८३ ) इति णल् ॥ ६० ॥

**महारथस्याध्वनि चक्रवर्तिनः परानपेक्षोद्वहनाद्यशःसितम् ।**
**रदावदातांशुमिषादनीदृशां हसन्तमन्तर्बलमर्वतां रवेः ॥ ६१ ॥**

**महारथस्येति** ॥ महारथस्यायुतयोधिनः चक्रवर्तिनः सार्वभौमस्य नलस्याध्वनि मार्गे आकाशगामित्वेन न विद्यतेऽपेक्षा यस्यां क्रियायामिति परेषामन्येषामश्वानामनपेक्षयानाश्रयेण यदुद्वहनं तस्माज्जातं यद्यशस्तेन यशसा सितं श्वेतम् । अत एव रदानां दन्तानामवदाता निर्मला येंऽशवः किरणास्तेषां मिषाद् अनीदृशां परानपेक्षोद्वहनासमर्थानां रवेः सूर्यस्यार्वतामश्वानां बलं अन्तर्मुखमध्ये हसन्तम् । सूर्याश्वाः परापेक्षोद्वहनाः नाहं तथा इत्युपहासस्तेषाम् । यद्वा, परानपेक्षोद्वहनात्सूर्याश्वानां बलं दन्तोज्ज्वलकिरणव्याजादन्तर्हसन्तमित्यन्वयः । स्वाभाविकं श्वेतत्वं यशोहेतुत्वेनोत्प्रेक्षितम् । सूर्याश्वानां नीलवर्णत्वात् ॥ ६१ ॥

**सितत्विषश्चञ्चलतामुपेयुषो मिषेण पुच्छस्य च केसरस्य च ।**
**स्फुटं चलच्चामरयुग्मचिह्नैरनिह्नुवानं निजवाजिराजताम् ॥ ६२ ॥**

**सितेति** ॥ सिता श्वेता त्विड् दीप्तिर्यस्य तस्य चञ्चलतां चापल्यमुपेयुषः प्राप्तस्य पुच्छस्य च केसरस्य स्कन्धकेशसमूहस्य च मिषेण व्याजेन चलच्चलं चामरयुग्मं तस्य चिह्नैः कृत्वा निजवाजिराजतां वाजिनां राजा वाजिराजः, तस्य भावस्तत्ता, निजस्यात्मनो वाजिराजता तामनिह्नुवानं प्रकटयन्तमिति स्फुटमुत्प्रेक्षे । राजा हि श्वेतचामरद्वयेन वीज्यते । चलनक्रियापेक्षया चिह्नैरिति बहुवचनम् । चिह्नैरिति तत्करोति–' ( ग० सू० २०४ ) इति ण्यन्ताद्भावे 'ल्युट् च' ( ३।३।११५ ) इति ल्युट् ॥ ६२ ॥

---

१ 'अत्र सापह्नवोत्प्रेक्षालंकारः' इति साहित्यविद्याधरी । २ 'अत्रापह्नवव्यतिरेकश्लेषालंकारसंकरः' इति साहित्यविद्याधरी । 'अत्र मिषशब्देनांशूनामसत्यत्वमापाद्य हासत्वोत्प्रेक्षणात्सापह्नवोत्प्रेक्षा । सा च व्यञ्जकाप्रयोगाद् गम्या' इति जीवातुः । ३ 'सप्त युञ्जन्ति रथचक्रमेकम्' ( ऋ० २।३।१४ ) इति श्रुतौ संभूयोद्वहनवर्णनादित्याशयः । ४ 'स्फुटाम्' इति मल्लि० संमतः पाठः । ५ 'अत्र सापह्नवोत्प्रेक्षालंकारः' इति साहित्यविद्याधरी ।

**अपि द्विजिह्वाभ्यवहारपौरुषे मुखानुषक्तायतवल्गुवल्गया ।**
**उपेयिवांसं प्रतिमल्लतां रयस्मये जितस्य प्रसभं गरुत्मतः ॥ ६३ ॥**

**अपीति ॥** रयस्मये वेगगर्वे प्रसभं बलात्कारेण जितस्य गरुत्मतो गरुडस्य द्विजिह्वाः सर्पास्तेषामभ्यवहारो भक्षणं तस्माद्यत्पौरुषं तस्मिन्नपि मुखेऽनुषक्ता लग्ना आयता दीर्घा वल्गुः सुन्दरी या वल्गा प्रग्रहस्तया कृत्वा प्रतिमल्लतां प्रतिभटत्वमुपेयिवांसं प्राप्तवन्तम् । वल्गाप्रान्ता हि सर्पपुच्छसदृशा दृश्यन्ते । पूर्वं वेगदर्पविषये जितः, अधुना सर्पभक्षणपौरुषेऽपि । वल्गा कान्यकुब्जभाषायां 'वाग' इति प्रसिद्धा ॥ ६३ ॥

**[1]स सिन्धुजं शीतमहःसहोदरं हरन्तमुच्चैःश्रवसः श्रियं हयम् ।**
**जिताखिलक्ष्माभृदनल्पलोचनस्तमारुरोह क्षितिपाकशासनः[2] ॥ ६४ ॥**

**स इति ॥** सिन्धुजं सिन्धुदेशोद्भवम् । शीतमहाश्चन्द्रस्तस्य सहोदरं तुल्यम् । उच्चैःश्रवस इन्द्राश्वस्य श्रियं शोभां हरन्तं तत्सदृशम् । किंभूतो नलः—जिता अखिलाः समस्ताः क्ष्माभृतो राजानो येन । तथा, अनल्पे महती लोचने यस्य सः । यद्वा,—अनल्पं लोचनं ज्ञानं यस्य । तथा क्षितौ पृथिव्यां पाकशासन इन्द्र इव । क्षितौ पाकं पचिक्रियां शास्त्युपदिशति सूपशास्त्रप्रणेतृत्वात् । उच्चैःश्रवा अपि समुद्रजः, स चन्द्रभ्राता तं यथा जितसमस्तशैलः सहस्रलोचनश्च इन्द्र आरोहति, तथा तं हयमारुरोहेति । 'सिन्धुजम्' इत्यनेनाश्वशास्त्रोक्तचतुःपञ्चाशदुत्तमकुलमध्यजत्वं बलित्वं महाकायत्वं च सूचितम् । कुलकम् ॥ ६४ ॥

**[4]निजा मयूखा इव तीक्ष्णदीधितिं[3] स्फुटारविन्दाङ्कितपाणिपङ्कजम् ।**
**तमश्ववारा जवनाश्वयायिनं प्रकाशरूपा मनुजेशमन्वयुः ॥ ६५ ॥**

**निजा इति ॥** अश्ववारा अश्वसादिनस्तं मनुजेशं राजानं नलमन्वयुरनुजग्मुः । किंभूता अश्ववाराः—निजाः स्वकीयाः । किंभूतं नलम्—स्फुटं प्रकटं लक्षणभूतानि रेखारूपाणि यान्यरविन्दानि तैरङ्कितं चिह्नितं पाणिपङ्कजं यस्य तं । तथा,—जवनो वेगवान् योऽश्वस्तेन यातीत्येवंशीलम् । के कमिव—निजाः सहजा मयूखाः किरणास्तीक्ष्णदीधितिं सूर्यमिव । सूर्यविशेषणमेव वा । स्फुटेति । 'कमलपाणिः सूर्यः' इत्यागमात् । सूर्योऽपि जवनैरश्वैर्याति । मयूखा यथा सदा सूर्यसहचारिणः, तथाश्ववारा अपि । तेन तेषां स्वरहस्यवेदित्वमुक्तम् । 'जवनस्तु जवाधिकः' इत्यमरः । 'प्रकाशोऽतिप्रसिद्धे स्यात्प्रकाशातपयोः स्फुटे' इति विश्वः । मीनाति हिनस्ति तम इति मयूखः, 'मीनातेरूखः' इत्यौणादिक ऊखप्रत्ययः । अश्वान्वृण्वते इत्यश्ववाराः 'कर्मण्यण्' ( ३।२।१ ) । 'जुचङ्क्रम्य–' ( ३।२।१५० ) इति युचि जवनः ॥ ६५ ॥

---

१ 'अत्र सापह्नवोपमालंकारः' इति साहित्यविद्याधरी । २ 'अत्रोपमापरिकरश्लेषालंकाराः' इति साहित्यविद्याधरी । 'तं हयमारुरोह उच्चैःश्रवसः श्रियं हरन्तम्' इत्युपमा । सा च श्लिष्टविशेषणात्संकीर्णैव । 'स क्षितिपाकशासनः इत्यतिशयोक्तिः' इति जीवातुः । ३ 'तिग्मदीधितिं' इति मल्लि० पाठः । ४ 'अत्रोपमाश्लेषरूपकमलंकारः' इति साहित्यविद्याधरी ।

**चलन्नलंकृत्य महारयं हयं स्ववाहवाहोचितवेषपेशलः ।**
**प्रमोदनिःस्पन्दतराक्षिपक्ष्मभिर्व्यलोकि लोकैर्नगरालयैर्नलः ॥६६॥**

**चलन्निति ॥** नगरालयैः नगरम् आलयः स्थानं येषां तैर्नगरवासिभिर्लोकैर्नलो व्यलोकि स्वेच्छया दृष्टः । किंभूतः—महारयमतिशयितवेगं हयमश्वं स्वाधिष्ठानेनालंकृत्य चलन्मध्येमार्गं गच्छन् । पुनः किंभूतः—स्वस्य वाहोऽश्वस्तल्लक्षणो वाहो वाहनं तस्योचितो वेषोऽलंकारादिस्तेन पेशलो रमणीयः । यद्वा,—वाहवाहस्याश्ववारस्य । यद्वा,—वाहस्याश्वस्य वाहे संचारणे उचितो वेषो नेपथ्यम् । किंभूतैर्लोकैः—प्रमोदेनातिशयितानन्देन निःस्पन्दतराण्यक्षिपक्ष्माणि नेत्रपक्ष्माणि येषां तैः । निर्निमेषं सादरावलोकनं कुर्वद्भिरित्यर्थः । 'महारयम्' इत्यनेनाष्टभिर्मात्राभिर्धनुःशतमात्रभूलङ्घनसामर्थ्यं सूचितम् । 'वाहस्तु मीनभेदे वृषे हये' इति विश्वः । 'पेशलः सुन्दरो दक्षः' इति च । **'निस्पंद'** इति पाठः । नगाः सन्त्यस्मिन्निति नगरम् । 'ऊषसुषि–' ५।२।१०७ ) इत्यत्र 'नगपांसुपाण्डु–' (वा० ३१९९) इति वचनात् रः ॥६६॥

**क्षणादथैष क्षणदापतिप्रभः प्रभञ्जनाध्येयजवेन वाजिना ।**
**सहैव ताभिर्जनदृष्टिवृष्टिभिर्बहिः पुरोऽभूत्पुरुहूतपौरुषः ॥ ६७ ॥**

**क्षणादिति ॥** अथानन्तरमेष नलः वाजिनाश्वेन ताभिर्जनदृष्टिवृष्टिभिः सहैव क्षणान्निमेषमात्रेण पुरो नगराद्बहिरभूत् । किंभूतो नलः—क्षणदा रात्रिस्तस्याः पतिश्चन्द्रः तद्वत्प्रभा यस्य । तथा पुरुहूत इन्द्रस्तद्वत्पौरुषं सामर्थ्यं यस्य । कीदृशेन वाजिना—प्रभञ्जनेन वायुनाध्येयोऽध्येतव्यो जवो वेगो यस्मात् । क्षणादिति विभक्तिप्रतिरूपकमव्ययम् । 'अपपरिबहिः—' ( २।१।१२ ) इति पञ्चमीसमासविधानादेव ज्ञापकाद्बहिर्योगे पञ्चमी ॥ ६७ ॥

**ततः प्रतीच्छ प्रहरेति भाषिणी परस्परोल्लासितशल्यपल्लवे ।**
**मृषामृधं सादिबले कुतूहलान्नलस्य नासीरगते वितेनतुः ॥ ६८ ॥**

**तत इति ॥** ततः पुरनिर्गमानन्तरं नासीरं सेनामुखं गते प्राप्ते नलस्य सादिबलेऽश्वारोहसैन्ये कुतूहलात्कौतुकादत एव मृषा अलीकं मृधं युद्धं वितेनतुश्चक्रतुः । किंभूते बले—हे शूर, त्वं प्रतीच्छ मदीयं शस्त्रं स्वाङ्गे गृहाण, प्रहर मयि प्रहारं कुर्विति भाषिणी वदन्ती । तथा,—परस्परस्योपर्युल्लासिता उद्घूर्णाः न तु क्षिप्ताः शल्यानां शस्त्राणां पल्लवाः प्रान्ता याभ्याम् । अत एव मृषा । पल्लवः प्रान्तवाची वस्त्रपल्लववत् । नलस्य कौतूहलादिति वा । शल्यं सतोमरं शस्त्रम् । 'सेनामुखं तु नासीरम्' इत्यमरः । परस्परेत्यत्र कस्कादित्वात्सः ॥ ६८ ॥

**प्रयातुमस्माकमियं कियत्पदं धरा तदम्भोधिरपि स्थलायताम् ।**
**इतीव वाहैर्निजवेगदर्पितैः पयोधिरोधक्षममुद्धतं रजः ॥ ६९ ॥**

**प्रयातुमिति ॥** निजेन स्वकीयेन वेगेन जवेन प्रयोजकेन दर्पितैर्गर्वं प्रापितै-

१ 'अत्र छेकानुप्रासोऽलंकारः' इति **साहित्यविद्याधरी** । 'वृत्त्यनुप्रासोऽलंकारः' इति **जीवातुः** । २ 'अत्र छेकानुप्रासोपमासहोक्तीनां संकरः' इति **साहित्यविद्याधरी** । 'वेगातिशयोक्तिः' इति **जीवातुः** । ३ 'अनुप्रासोपमालंकारः' इति **साहित्यविद्याधरी** । ४ 'उत्थितं' **मल्लि०** पाठः ।

र्वोहैरश्वैरितीव मनसि धृत्वा, इति हेतोर्वा रज उद्धतमुत्थापितम् । इतीति किम्—इयं धरा पृथिव्यस्माकं धावतामश्वानां कियत्पदं स्यात्, अपि तु द्वित्राणि पदानि भविष्यन्तीति । यस्मादत एव प्रयातुं प्रकर्षेण यातुं गन्तुमम्भोधिरपि समुद्रोऽपि स्थलायतां स्थलमिवाचरतु भवतु । किंभूतं रजः—पयोधेः समुद्रस्य रोधः पूरणं तत्र क्षमं समर्थम् । 'प्रयातुम्' इत्यस्य 'स्थलायताम्' इत्यनेन संबन्धः । दर्पितैरिति ण्यन्तान्निष्ठा । अन्यथा श्यन्विकरणस्य दृप्त इति स्यात् । शब्विकरणस्य तु दृपित इति ॥ ६९ ॥

**हरेर्यदक्रामि पदैककेन खं पदैश्चतुर्भिः क्रमणेऽपि तस्य नः ।**
**त्रपा हरीणामिति नम्रिताननैर्न्यवर्ति तैरर्धनभःकृतक्रमैः ॥ ७० ॥**

**हरेरिति** ॥ इति विचार्य हेतोर्वा नम्रिताननैः नम्रितं नम्रीकृतमाननं मुखं यैः अर्धेन पूर्वार्धेन नभस्यन्तरिक्षे कृतः क्रमः पादविक्षेपो यैस्तैरश्वैर्न्यवर्ति निवृत्तम् । अर्धे नभसीति वा । इतीति किम्—यत् खं नभो हरेर्विष्णोरेककेनासहायेन पदा चरणेनाक्राम्याक्रान्तं तस्य खस्य नभसश्चतुर्भिरेव पदैश्चरणैः क्रमण आक्रमणे नोऽस्माकं हरीणामश्वानाम् । अथवा विष्णूनाम् । बहूनामस्माकं त्रपा लज्जा भविष्यतीति । यस्मादसजातीयेनैकेन हरिणा एकेनैव पादेन यदाक्रान्तं नभस्तस्य बहुभिरस्माभिर्बहुभिः पदैराक्रमणे नोऽस्माकं महती लज्जा कथं न स्यादिति हरिशब्दच्छलेन लुप्तोत्प्रेक्षा । सलज्जश्च नम्रमुखो भवति । अर्धनभःकृतक्रमैरित्यनेन गतेरुत्तमत्वं सूचितम् । तेन सादिनामानन्दोऽरीणां भीतिश्च । 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' ( ७।३।३४ ) इति वृद्धिनिषेधात् अक्रामि इति चिन्त्यम् । 'सकृद्बद्धमबद्धं भवति, द्विर्बद्धं सुबद्धं भवति' इति तदो दावचनज्ञापितया परिभाषया वृद्धिनिषेधस्यानित्यत्वमाश्रित्य कथंचित्परिहरणीयम् । यदा, तु 'तदो दा च' इत्यत्र स्वार्थे दा इति प्रत्यय इति पक्षस्तदैतस्याः परिभाषाया निर्मूलत्वाच्चिन्त्यमेव । यद्वा,—'प्राग्दिशो—' ( ५।३।१ ) इति थमो विभक्तित्वात् 'न विभक्तौ—' ( १।३।४ ) इत्यनेनैव मकारस्येत्संज्ञानिषेधे सिद्धे 'इदमस्थमुः' ( ५।३।२४ ) इत्युकारोच्चारणं व्यर्थं सदेतस्याः परिभाषाया मूलमिति ज्ञेयम् । गैत्यन्तरं वा गवेषणीयम् । पदेति 'पद्दन्नो—' ( ६।१।६३ ) इति पदादेशः । एककेनेति 'एकादाकिनिच्च—' ( ५।३।५२ ) इति चकारात्कैन् ॥ ७० ॥

---

१ 'अत्रानुप्रासोऽलंकारः' इति साहित्यविद्याधरी । २ अत एव मनोरमायां दीक्षितैः—'कथं तर्हि, "हरेर्यदक्रामि पदैककेन खम्" इति श्रीहर्षः? प्रमाद एवायम् । यदि समाधेयमेव इत्याग्रहस्तर्हि निवृत्तप्रेषणात्प्राकृतेऽर्थे णिच्चि ततश्चिण् बोध्यः' इत्युक्तम् । तथा च णिन्निमित्तिकात्र वृद्धिः । न च तत्राप्यमन्तत्वेन मित्त्वेन ह्रस्वापत्तिः । 'मितां ह्रस्वः' ( ६।४।९२ ) इत्यत्र 'वा चित्तविरागे'(६।४।९१) इत्यतो वा इत्यस्यानुवृत्तौ व्यवस्थितविभाषाश्रयणेन ह्रस्वाप्रवृत्तेः इति तेषामाशयः । सुखावबोधायां तु 'आक्रामि' इति पाठमङ्गीकृत्य क्रमणं क्रमः, क्रम एव क्रामः, प्रज्ञाद्यणन्तरस्याङा समासे 'अत इनि–' (५।२।११५) इतीनिप्रत्ययान्तं आक्रामि इति खम् इत्येतद्विशेषणं सुबन्तमिति व्याख्येयम्' इत्युक्तम् । ३ 'अत्र प्रतीयमानोत्प्रेक्षा श्लेषश्चालंकारः' इति साहित्यविद्याधरी ।

**चमूचरास्तस्य नृपस्य सादिनो जिनोक्तिषु श्राद्धतयेव सैन्धवाः।**
**विहारदेशं तमवाप्य मण्डलीमकारयन् भूरितुरंगमानपि ॥ ७१ ॥**

**चमूचरा इति** ॥ तस्य नृपस्य चमूचराः सेनाचराः सादिनोऽश्ववारास्तं पूर्वोक्तं विहारदेशं बाह्यलीलाप्रदेशमवाप्य प्राप्य भूरितुरंगमानपि बहूनश्वानपि मण्डलीं मण्डलाकारेण गतिविशेषमकारयन् । 'अपि'शब्दात्तन्मण्डलीकरणवशात्स्वयमपि कृतवन्त इत्यर्थः । के इव—जिनोक्तिषु बौद्धवचनेषु श्राद्धतयास्तिकतया सैन्धवा इव सिन्धुदेशोद्भवा जिना इव । विहारदेशं सुगतालयं प्राप्य यथा जिना मण्डलाकारेणावतिष्ठन्ते तथेत्यर्थः । तेषामयं संप्रदायः । तण्डुलादिसप्तधान्यमयीं मण्डलीं कारयन्तीति तत्संप्रदायविदः । चमूचरा इति 'चरेष्टः' ( ३।२।१६ ) । श्राद्ध इति मत्वर्थे 'प्रज्ञा—' ( ५।२।१०१ ) इति णः । मण्डलीमिति गौरादित्वान्ङीष् । तुरंगमानिति 'हृक्रोः—' ( १।४।५३ ) इति कर्मत्वम् ॥ ७१ ॥

**द्विषद्भिरेवास्य विलङ्घिता दिशो यशोभिरेवाब्धिरकारि गोष्पदम् ।**
**इतीव धारामवधीर्य मण्डलीक्रियाश्रियामण्डि तुरंगमैः स्थली ॥७२॥**

**द्विषद्भिरिति** ॥ तुरंगमैरश्वैरितीव हेतोः, विचार्य वा धारामास्कन्दितादिपञ्चप्रकारां गतिमवधीर्य त्यक्त्वावज्ञाय मण्डलीक्रियाश्रिया मण्डलीकरणजनितशोभया स्थली अकृत्रिमा भूमिः, अमण्ड्यभूषि । अश्ववारा धाराभिः प्रथममश्वान्नमयन्ति, पश्चाद्भ्रमिगत्या इति तेषां जातिः । इतीति किम्—अस्य द्विषद्भिरेव दिशो भयेन विलङ्घिता आक्रान्ताः, अस्य यशोभिरेव कीर्तिभिरेवाब्धिः समुद्रो गोष्पदं गोखुरप्रमाणोऽनायासेन लङ्घ्य एवंविधोऽकारि कृतः । ऋजुगत्याऽस्माभिर्दिगन्तः समुद्रश्च लङ्घनीयः । तयोर्लङ्घनमन्यैरेव कृतमिति तत्रैव भ्रमिं चक्रुरित्यर्थः । 'आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम् । गतयोऽमूः पञ्च धाराः' इत्यमरः । गोष्पदमिति 'गोष्पदं सेवितासेवितप्रमाणेषु' (६।१।१४५) इति सुट्षत्वे । धारामिति धार्यन्ते गतौ स्थाप्यन्तेऽनयेति धारा । भिदादित्वादङ् । जातावेकवचनम् । स्थलीति । अकृत्रिमत्वे 'जानपद—' ( ४।१।४२ ) इति ङीष् । अवधीर्येति 'अवधीरृ अत्यवज्ञायाम् (?)' इति धातो रूपं न, तस्य ल्यबादेशासंभवात् । किंत्ववाधिधिपूर्वस्य 'ईर प्रेरणे' इत्यस्य । अवधीत्यत्र शकन्ध्वादित्वात्पररूपम् । ततश्चावधीर्य इति सिद्धम् ॥ ७२ ॥

**अचीकरच्चारु हयेन या भ्रमीर्निजातपत्रस्य तलस्थले नलः ।**
**मरुत्किमद्यापि न तासु शिक्षते वितत्य वात्यामयचक्रचङ्क्रमान् ॥७३॥**

**अचीकरदिति** ॥ नलो निजातपत्रस्य स्वकीयछत्रस्य तलस्थलेऽधोभागे हयेनाश्वेन चारु सम्यक् ( मनोज्ञा ) या भ्रमीर्भ्रमणान्यचीकरत्कारयामास, तासु विषये मरुद्वायुरद्यापि वात्यामया वातसमूहरूपाश्चक्राकाराश्चङ्क्रमा भ्रमणानि तान्वितत्य किं न शिक्षते । भ्रमिविषये ज्ञाने शक्तो भवितुं नेच्छति किम्, अपि तु शक्तो भवितुमिच्छत्येव । परमद्यापि शक्तो नाभूदित्यर्थः । वात्यावर्तं कुर्वन् वायुरपि भ्रमिज्ञाने शक्तो

---

१ 'अत्रोत्प्रेक्षालंकारः' इति साहित्यविद्याधरी । २ 'अत्रोत्प्रेक्षाऽतिशयोक्त्यलंकारः' इति साहित्यविद्याधरी । ३ 'चारु' इत्यस्य मनोज्ञार्थकत्वेन भ्रमिविशेषणत्वे द्वितीयापत्तिः स्यात्, अतः 'चारु' इत्यस्य क्रियाविशेषणत्वमेवोचितम् ।

भवितुमिच्छतीवेत्युत्प्रेक्षा । एतेनाश्वस्य चलनक्रियादाक्ष्यं सत्त्ववत्त्वं चोक्तम् । 'सत्त्वरहितो न संग्राह्यः' इति, 'तल्लक्षणगुणैः श्लाघ्यः किं सत्त्वेन विना हयः । पञ्चेन्द्रियसमेतोऽपि यथा कायो विनात्मना ॥' इति सारसिन्धौ । हयेनेति 'हृक्रोः—' ( १।४।५३ ) इति विकल्पितत्वात्कर्मत्वाभावः । भ्रमीरिति कृष्यादित्वादिक् । शिक्षत इति सन्नन्ताच्छकेः 'शिक्षेर्जिज्ञासायाम्' इति वक्तव्यात्तङ् । चङ्क्रमान् [ इति ] यङन्ताद्धञि अतोलोपे 'यस्य हलः' (६।४।४९) इति यलोपः । वितत्य शिक्षते इति समानकाले क्त्वा । पाशादित्वाद्धात्या । ततस्ताद्रूप्ये मयट् । 'ताः सुशिक्षत' इति पाठे ता भ्रमीः सु शोभनं किं न शिक्षते जिज्ञासते ॥ ७३ ॥

**विवेश गत्वा स विलासकाननं ततः क्षणात्क्षोणिपतिर्धृतीच्छया ।**
**प्रवालरागच्छुरितं सुषुप्सया हरिर्घनच्छायमिवार्णसां निधिम् ॥ ७४ ॥**

**विवेशेति** ॥ ततोऽनन्तरं स क्षोणिपतिः पृथ्वीपतिर्नलः प्रवालरागेण नवपल्लवलौहित्येन छुरितं विचित्रं घनच्छायं निबिडच्छायं विलासकाननं क्रीडावनं गत्वा प्राप्य क्षणाच्छीघ्रं धृतीच्छया प्रीत्यभिलाषेण 'अत्र मम संतापो निवर्तिष्यते' इत्यभिलाषेण, अन्यत्र,—व्यासङ्गाद्धैर्यं भवेदिति वासनया वा, विवेश । कः कया कमिव— हरिर्विष्णुः सुषुप्सया स्वप्तुमिच्छया प्रवालरागेण विद्रुमलौहित्येन छुरितं श्यामत्वाद्धनस्य मेघस्य छायेव छाया यस्य तम् । एवंभूतमर्णसां निधिं समुद्रमिव । अथ च पल्लवताम्रं जलस्थानभूतं निबिडच्छायं वनं सुषुप्सया हरिः सिंहो यथा विशति तथेत्यर्थः । क्षोणिपतिरिति 'ङ्यापोः—' ( ६।३।६३ ) इति ह्रस्वः, ह्रस्वान्त एव वा । दीर्घान्तस्तु 'कृदिकारादक्तिनः' ( ग० सू० ५० ) इति ङीषन्तत्वात् ॥ ७४ ॥

**वनान्तपर्यन्तमुपेत्य सस्पृहं क्रमेण तस्मिन्नवतीर्णदृक्पथे ।**
**न्यवर्ति दृष्टिप्रकरैः पुरौकसामनुव्रजद्बन्धुसमाजबन्धुभिः ॥ ७५ ॥**

**वनेति** ॥ पुरौकसां नगरवासिनां दृष्टिप्रकरैर्नेत्रसमूहैर्नलावलोकनार्थं सस्पृहं साभिलाषं वनान्तस्य वनस्वरूपस्य पर्यन्तं मर्यादामुपेत्य गत्वा न्यवर्ति निवृत्तम् । कस्मिन्सति—तस्मिन्नले क्रमेणावतीर्णदृक्पथे दृष्ट्या( र्गा )त्रागोचरे सति । किंभूतैर्दृष्टिप्रकरैः—अनुव्रजन्ननुगच्छन् यो बन्धुसमाज इष्टसमूहस्तस्य बन्धुभिः सदृशैः । वनान्तः पर्यन्तोऽवधिर्यथा भवति तथेति क्रियाविशेषणं वा । बन्धुभिरपि वनान्तमुदकसमीपं क्रीडावनसमीपं वा साभिलाषं गत्वा तत्रैव पथि स्थित्वा पथिकेऽदृष्टे सति निवर्त्यते । 'जीवनं भुवनं वनम्' इत्यमरः । ( पुरौकसामिति 'पॄ पालने' इत्यस्मान्मूलविभुजादेराकृतिगणत्वात्कप्रत्यये 'उदोष्ठ्यपूर्वस्य' ( ७।१।१०२ ) इत्युत्त्वे रपरत्वे पुर इत्यदन्तेन पुरे पुरं वा ओको येषामिति 'सप्तमीविशेषणे बहुव्रीहौ' ( २।२।३५ ) इत्यत्र सप्तमीग्रहणात्तज्ज्ञापकात् लक्षणया वा बहुव्रीहौ सुब्लुकि 'वृद्धिरेचि' ( ६।१।८८ ) इति वृद्धौ सिद्धमिष्टं रूपम् । ) दृक्पथे इति 'ऋक्पूर्—' ( ५।४।७४ ) इति समासान्तः ॥ ७५ ॥

---

१ 'अत्रोत्प्रेक्षालंकारः' इति साहित्यविद्याधरी । २ 'अम्भसाम्' इति तिलकसंमतः पाठः । ३ 'अत्रोपमाश्लेषोक्तिरलंकारः' इति साहित्यविद्याधरी । ४ अयं पाठः कुत्रचिन्नास्ति । ५ 'अत्रानुप्रासः सहोक्तिश्चालंकारः' इति साहित्यविद्याधरी ।

**ततः प्रसूने च फले च मञ्जुले स संमुखस्थाङ्गुलिना जनाधिपः ।**
**निवेद्यमानं वनपालपाणिना व्यलोकयत्काननकामनीयकम् ॥ ७६ ॥**

**तत इति** ॥ ततो वनप्रवेशानन्तरं स जनाधिपो नलः काननस्य क्रीडावनस्य कामनीयकं रामणीयकं व्यलोकयत् पश्यति स्म । किंभूतम्—वनपालस्योद्यानरक्षकस्य पाणिना हस्तेन निवेद्यमानं ज्ञाप्यमानम् । किंभूतेन—मञ्जुले रमणीये प्रसूने पुष्पे फले च ( जातावेकवचनम् ) संमुखस्थाभिमुखाङ्गुलिर्यस्य । कामनीयकमिति भावे 'योपधात्—' (५।१।१३२) इति वुञ् । गुणवाचित्वात् 'पूरणगुण—' ( २।२।११ ) इति समासनिषेधेऽपि 'संज्ञाप्रमाणत्वात्' इति ज्ञापकबलात्समासः ॥ ७६ ॥

**फलानि पुष्पाणि च पल्लवे करे वयोतिपातोद्गतवातवेपिते ।**
**स्थितैः समादाय महर्षिवार्धकाद्वने तदातिथ्यमशिक्षि शाखिभिः ॥७७॥**

**फलानीति** ॥ वने विद्यमानैः शाखिभिर्वृक्षैर्महर्षिवार्धकाद्वृद्धमहर्षिसमूहात्तदातिथ्यं तस्य नलस्य पूजाऽशिक्षि शिक्षितेव । किंभूतैः शाखिभिः—वयोतिपातेन पक्षिपतनेनोद्गत उच्छ्रितो यो वातस्तेन वेपिते कम्पिते पल्लवे शाखाग्रलक्षणे एव करे हस्ते पुष्पाणि फलानि च समादाय गृहीत्वा स्थितैः । वृद्धमहर्षिसङ्घोऽपि वृद्धत्वादेव चले हस्ते फलानि पुष्पाणि च गृहीत्वा राजपूजार्थं यथा तिष्ठति तथा वृक्षा अपि । उद्याने महर्षयस्तिष्ठन्तीति सूचितम् । विजने विद्याभ्यासश्च । फलपुष्पयुक्ता वृक्षास्तिष्ठन्तीति भावः । वृद्धानां समूहो वार्धकम् 'गोत्रोक्षो—' ( ४।२।३९ ) इति सूत्रे 'वृद्धाच्च' इति वक्तव्याद्वुञ् । महर्षीणां वार्धकमिति षष्ठीसमासः । सामर्थ्याद्वृत्त्यन्तर्गतस्यापि 'वृद्ध'शब्दस्य यथाकथंचित् 'महर्षि'शब्देनान्वयः । महर्षिपक्षे,—वयसस्तारुण्यस्य । 'आख्यातोपयोगे' ( १।४।२९ ) इत्यपादानत्वम् । आतिथ्यम्, तादर्थ्ये 'अतिथेर्ञ्यः' ( ५।४।२६ ) इति ञ्यः । शाखिनः व्रीह्यादित्वादिनिः ॥ ७७ ॥

राजानं दृष्ट्वा सात्त्विकभावोत्पत्तेः कण्टकितत्वात्प्रथमं केतकं वर्णयति—

**विनिद्रपत्रालिगतालिकैतवान्मृगाङ्कचूडामणिवर्जनार्जितम् ।**
**दधानमाशासु चरिष्णु दुर्यशः स कौतुकी तत्र ददर्श केतकम् ॥ ७८॥**

**विनिद्रेति** ॥ स नलस्तत्र वने कौतुकी अपूर्वपुष्पादिदर्शनोत्सुकः, विरही वा सन् केतकं केतकीपुष्पं ददर्श । किंभूतं केतकम्—विनिद्रा विकसिता पत्रालिः पत्रपङ्क्तिस्तत्र गताः, तां वा गता ये अलयो भ्रमरास्तेषां कैतवान्मिषात् मृगाङ्कश्चन्द्रः चूडामणौ यस्य स शिवः, तेन वर्जनं पुराणप्रसिद्धः परित्यागस्तेनार्जितमुपार्जितमाशासु दिशासु चरिष्णु प्रसरणशीलं दुर्यशोऽपकीर्तिः, तां दधानम् । भ्रमरा न सन्ति, किंतु महादेवकृतपरित्यागजन्यमयश इति । महता परित्यक्तोऽयशोभाग्भवति । चरिष्णु 'अलंकृञ्–' ( ३।२।१३६ ) इत्यादिना इष्णुच् । कौतुकी 'अत इनिः'(५।२।११५) । केतक्याः पुष्पं केतकम् । विकारावयवप्रत्ययस्य 'पुष्पमूलेषु बहुलम्' (वा० २९५०) इति वचनाल्लुक् 'लुक् तद्धित–' (१।४।४९) इति स्त्रीप्रत्ययलुक् ॥ ७८ ॥

---

१ 'अत्र जात्यनुप्रासावलंकारौ' इति साहित्यविद्याधरी । 'स्वभावोक्तिः' इति जीवातुः ।
२ 'अत्र प्रतीयमानोत्प्रेक्षा श्लेषश्चालंकारः' इति साहित्यविद्याधरी । 'उत्प्रेक्षेयम्, सा च व्यञ्जकाप्रयोगाद्गम्या पूर्वोक्तरूपकश्लेषाभ्यामुत्थापिता चेति संकरः' इति जीवातुः ।
३ तत्तु 'न केतक्या सदाशिवम्' इति निषेधादित्याशयः । ४ 'अत्रालिकैतवादित्यलित्वापह्नवेन दुर्यशस्त्वारोपादपह्नवालंकारः, 'निषेध्य विषयं साम्यादन्यारोपे ह्यपह्नवः' इति लक्षणात्' इति जीवातुः ।

**वियोगभाजां हृदि कण्टकैः कटुर्निधीयसे कर्णिशरः स्मरेण यत् ।**
**ततो दुराकर्षतया तदन्तकृद्विगीयसे मन्मथदेहदाहिना ॥ ७९ ॥**

**वियोगेति** ॥ 'तेन नलेन इति क्रुधा क्रोधेन केतकमाक्रुश्यतानिन्द्यत' इति तृतीयश्लोकेनान्वयः । इतीति किम्—स्मरेण कामेन वियोगभाजां वियोगिनां स्त्रीपुंसानां हृदि वक्षसि कण्टकैः कटुः क्रूरः कर्णिशरः कर्णयुक्तो बाणः त्वं यद्यस्मान्निधीयसे निक्षिप्यसे ततस्तस्मात्कारणात् कर्णिशरत्वाद्वा हृदयाद्वा दुराकर्षतयोद्धर्तुमशक्यतया तदन्तकृद्वियोगिनां प्राणहारी त्वं मन्मथदेहदाहिना स्मरहरेण महादेवेन विगीयसे निन्द्यसे । येन वियोगिनो हता अस्मदादयः, स दग्ध एव तत्प्रेष्यस्त्वं केतकमिति निन्द्यसे । लुप्तोत्प्रेक्षा ॥ ७९ ॥

**त्वदग्रसूचीसचिवेन कामिनोर्मनोभवः सीव्यति दुर्यशःपटौ ।**
**स्फुटं स पत्रैः करपत्रमूर्तिभिर्वियोगिहृद्दारुणि दारुणायते ॥ ८० ॥**

**त्वदग्रेति** ॥ मनोभवः कामस्तवाग्रमेव सूक्ष्मत्वात्तीक्ष्णत्वाच्च सूची तद्रूपेण सचिवेनोपकारकेण सहायेन कृत्वा कामिनोः स्त्रीपुंसयोः परस्परधैर्यभङ्गौ दुर्यशोलक्षणौ पटौ सीव्यति योजयति । तत्प्रथमकलिकयातिसुरभितयोद्दीपनभावहेतुभूतया कामिनानुचितानुचितसंबन्धमप्यविचार्य मिथो रिरंसू प्रवर्तेते इति भावः । स्फुटमुत्प्रेक्षते—स कामो वियोगिनां हृदेव दारु काष्टं तस्मिन् करपत्रवत्क्रकचवन्मूर्तिः स्वरूपं येषां तैस्तव पत्रैः कृत्वा दारुणायते भीषणवदाचरति । केतकप्रदर्शनाद्वियोगिनोः स्त्रीपुंसयोर्धैर्यभङ्गः, पत्रदर्शनाच्च हृदयं विदीर्णं भवतीति भावः । '**दारुणायसे**' इति पाठे त्वमिति ज्ञातव्यम् । सूची इति गौरादिपाठान्ङीष् । कामिनोः वियोगीत्यत्र च 'पुमान्स्त्रिया' ( १।२।६७ ) इत्येकशेषः ॥ ८० ॥

**धनुर्मधुस्विन्नकरोऽपि भीमजापरं परागैस्तव धूलिहस्तयन् ।**
**प्रसूनधन्वा शरसात्करोति मामिति क्रुधाक्रुश्यत तेन केतकम् ॥८१॥**

**धनुरिति** ॥ प्रसूनधन्वा कामस्तव परागैर्धूलिभिः धूलिहस्तयन् धूलियुक्तं हस्तं कुर्वन्सन् भीमजापरं भैम्यनुरक्तं मां शरसाद्बाणाधीनं बाणलक्ष्यं करोति । किंभूतः कामः—धनुः पुष्पं तस्य मधुना रसेन स्विन्न आर्द्रः करो यस्य इति केतकमनिन्द्यत । तव धूलिर्यदि न स्यात्तदा कामः स्विन्नकरत्वाच्च्युतसायकः स्यात् । अतोऽयमपराधस्तवैव । स्विन्नकरो धनुर्धरो धूलियुक्तं हस्तं करोतीति जातिः । धूलिहस्तयन्निति धूलियुक्तं हस्तं करोतीति ण्यन्ताच्छतृ । प्रसूनधन्वा इति 'धनुषश्च' ( ५।४।१३२ ) इत्यनङ् । शरसादिति 'तदधीन–' ( ५।४।५४ ) इति सातिः ॥ ८१ ॥

**विदर्भसुभ्रूस्तनतुङ्गताप्तये घटानिवापश्यदलं तपस्यतः ।**
**फलानि धूमस्य धयानधोमुखान्स दाडिमे दोहदधूपिनि द्रुमे ॥ ८२ ॥**

**विदर्भेति** ॥ स नलो दाडिमे द्रुमे दाडिमसंज्ञके फलानि अपश्यत् । किंभूते

१ 'अत्रेश्वरकृतस्य केतकीविगर्हणस्य तद्गतवियोगिहिंस्रताहेतुत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा, सा च व्यञ्जकाप्रयोगाद्गम्या, सा चोक्तरूपकोत्थापितेति संकरः' इति **जीवातुः** । २ 'त्वदग्रसूचीसचिवः स' इति **मल्लि०** संमतः पाठः । ३ 'दारुणायते' इत्युपमा, सा च हृद्दारुणीति रूपकानुप्राणितेति संकरः' इति **जीवातुः** । ४ '०ऽति भीमजापरं' इति **मल्लि०** पाठः ।

अजननी मन्मरणानन्तरमप्रसवित्री । यतो जरातुरा न वृद्धा न । प्रसवसंभावनायामपि पातिव्रत्यादजननी । वप्रे सूतिश्चेष्टा यस्याः । यद्वा,—वप्र एव सानुरेव सुतरामूती रक्षणं यस्याः सा । मद्वियोगात्पर्वतभ्रमणं करिष्यतीत्यर्थः । वरटाविशेषणानि । तयोः पुत्रवरटयोः । तं मामर्दयन्पीडयन्मारयन् हे विधे ब्रह्मन्, दैव वा । करुणा दया त्वां न रुणद्धि नावृणोति । न वारयतीत्यर्थः । अहो आश्चर्यम् । एवंविधपीडने हि त्वया सदयेन भवितव्यम् । तव देवस्य सतो दया नोत्पद्यते, किं पुनर्मनुष्यस्येति करुणोक्तिः । 'हंसस्य योषिद्वरटा' इत्यमरः । अर्दयन्निति चौरादिकादर्दयतेः 'संबोधने च' ( ३।२।१२५ ) इति शता । आत्मनेपद्येवेति केचित् । तदा 'गणकृत्यमनित्यम्' ( परि० ९६ ) इत्यर्दनमर्दस्तद्वन्तं कुर्वन्निति मतुब्लुका वा समाधिः[1] ॥ १३५ ॥

**मुहूर्तमात्रं भवनिन्दया दयासखाः सखायः स्रवदश्रवो मम ।**
**निवृत्तिमेष्यन्ति परं दुरुत्तरस्त्वयैव मातः! सुतशोकसागरः ॥१३६॥**

**मुहूर्तेति** ॥ मम सखायो मित्राणि पक्षिणः मुहूर्तमात्रं क्षणमात्रमीदृश्येव संसारस्थितिरिति भवस्य निन्दया निवृत्तिं दुःखविस्मरणमेष्यन्ति यास्यन्ति । किंभूताः—स्रवन्ति गलन्त्यश्रूणि येषाम् । तथा,—दयासखा दयालवः । हे मातः, परं केवलं सुतशोकः पुत्रशोक एव सागरः समुद्रस्त्वयैव दुरुत्तरो दुःखेनापि तरितुमशक्यः । भविष्यतीति शेषः । मम मित्राणां क्षणमात्रं दुःखं, तव तु यावज्जीवमिति भावः । मुहूर्तमात्रमिति 'कालाध्वनोः–' ( २।३।५ ) इति द्वितीया । दयासखा इति 'राजाहःसखिभ्यष्टच्' ( ५।४।९१ ) । दुरुत्तर इति खल् । 'न लोका–' ( २।३।६९ ) इति निषेधात्त्वयेति तृतीया[2] ॥ १३६ ॥

**मदर्थसंदेशमृणालमन्थरः प्रियः कियद्दूर इति त्वयोदिते ।**
**विलोकयन्त्या रुदतोऽथ पक्षिणः प्रिये! स कीदृग्भविता तव क्षणः॥**

**मदर्थेति** ॥ हे प्रिये! स तव क्षणः समयः कीदृक्कीदृशो भविता भविष्यति । नितरामनिर्वाच्यो भविष्यतीति भावः । किंभूतायास्तव—त्वया इति पूर्वोक्तप्रकारेण वचसि मत्सहचरान्प्रत्युदिते उक्ते सति । पृष्टे सतीत्यर्थः । अथानन्तरमेव पक्षिणो मत्सहचरान्रुदतो रोदनं कुर्वतो विलोकयन्त्याः पश्यन्त्याः । इतीति किम्—हे सहचराः, मद्यमिमे मदर्थे ये संदेशमृणाले संदेशश्च मृणालं च तयोर्विषये मन्थरोऽलसः । तत्र गत्वा त्वमिदं मत्प्रियां ब्रूहि इति संदेश आज्ञा, मृणालं च मद्भक्ष्यम् । एवंभूतो मत्प्रियः कियद्दूरे पथि वर्तेत इति । कियद्दूरं यस्येति प्रियविशेषणं वा । पूर्वत्रान्यपदार्थः पन्थाः । मदर्थं मृणालान्यानेयानीति संदेशमृणालानि तैर्मन्थरो, भारबाहुल्यान्मन्थर इति वा । मदर्थ इति 'अर्थेन नित्यसमासः–' ( वा० १२७३ ) इति समासः[3] ॥ १३७ ॥

---

१ 'अत्र परिकरालंकारः' इति **साहित्यविद्याधरी** । २ 'अत्रानुप्रासरूपकालंकारौ' इति **साहित्यविद्याधरी** । ३ 'अत्र भावोदयालंकारः' इति **साहित्यविद्याधरी** ।

**कथं विधातर्मयि पाणिपङ्कजात्तव प्रियाशैत्यमृदुत्वशिल्पिनः ।**
**वियोक्ष्यसे वल्लभयेति निर्गता लिपिर्ललाटंतपनिष्ठुराक्षरा ॥ १३८ ॥**

**कथमिति** ॥ हे विधातः ब्रह्मन्! मयि विषये तव पाणिपङ्कजात्करकमलादित्येवंभूता लिपिः कथं निर्गता? किंभूतात्—प्रियायाः शैत्यं शीतत्वं, मृदुत्वं च तयोः शिल्पिनो निर्मातुः। इतीति किम्—त्वं वल्लभया प्रियया सह वियोक्ष्यसे वियोगं प्राप्स्यसीति। (किंभूता—)ललाटं तापयन्ति ललाटंतपानि निष्ठुराणि कठिनान्यक्षराणि यस्याः। लिप्यामेतदयुक्तमित्यर्थः। 'कारणगुणाः कार्यगुणानारभन्ते' इति न्यायात्। करपङ्कजं शीतलं मृदु च तस्य दाहकाठिन्ययोरुत्पादकत्वं विरुद्धमिति भावः। ललाटंतपेत्यत्र 'असूर्यललाटयोः–' (३।२।३६) इति खश्, 'अरुर्द्विषदजन्तस्य (६।३।६७) इति मुम् ॥ १३८ ॥

**अयि स्वयूथ्यैरशनिक्षतोपमं ममाद्य वृत्तान्तमिमं बतोदिता ।**
**मुखानि लोलाक्षि! दिशामसंशयं दशापि शून्यानि विलोकयिष्यसि १३९**

**अयीति** ॥ अयि प्रिये, लोलाक्षि स्वभावतः शोकवशाच्चञ्चलनेत्रे! त्वमद्य दिशां दशापि मुखान्यसंशयं निश्चितमेव शून्यानि रिक्तानि विलोकयिष्यसि ईक्षयिष्यसि। 'बत' खेदे। मां विना सर्वं शून्यमिव द्रक्ष्यसीति भावः। किंभूता—स्वयूथ्यैः स्ववर्ग्यैर्हंसैरशनिक्षतोपमं वज्रप्रहारसदृशमिमं मरणरूपं मम वृत्तान्तं वार्तामुदितोक्ता। ब्रूञोऽर्थग्रहणाद्वदिर्द्विकर्मा। वृत्तान्तम्। मुख्यकर्मणि द्वितीया ॥ १३९ ॥

**ममैव शोकेन विदीर्णवक्षसा त्वया विचित्राङ्गि! विपद्यते यदि ।**
**तदास्मि दैवेन हतोऽपि हा हतः स्फुटं यतस्ते शिशवः परासवः १४०**

**ममेति** ॥ हे विचित्राङ्गि सुन्दरगात्रि! ममैव शोकेन दुःखेन विदीर्णवक्षसा स्फुटितहृदयया त्वया यदि विपद्यते म्रियते, तदा तर्हि, 'हा' खेदे, अहं दैवेन हतोऽपि पुनर्हतोऽस्मि। यतः—स्फुटं निश्चितं ते इत्यभिनयेनाल्पीयांसः शिशवो बालकाः परासवो मृता भवेयुः। मां विना त्वत्तोऽपि तेषां जीवनं संभाव्यते, तव मरणे सति तेऽपि मरिष्यन्तीति पिष्टपेषणमेव दैवेन कृतमिति भावः। '**एकशोकेन**' इति पाठः ॥ १४० ॥

**तवापि हा हा विरहात्क्षुधाकुलाः कुलायकूलेषु विलुठ्य तेषु ते ।**
**चिरेण लब्धा बहुभिर्मनोरथैर्गताः क्षणेनास्फुटितेक्षणा मम ॥ १४१ ॥**

**तवेति** ॥ 'हा हा' इति खेदे। हे प्रिये! मम ते बालका बहुभिर्मनोरथैश्चिरेण बहुकालेन लब्धाः सन्तः क्षणेन गताः। मृतप्राया इत्यर्थः। किंभूताः—क्षुधाकुलाः। तथा,—अतिबाल्यादस्फुटितेक्षणा अप्रकाशितनेत्राः। किं कृत्वा—तवापि,

---

१ 'अत्र विषमं रूपकं चालंकारः। तथा च **रुद्रटः**—(काव्यालं० ९।४५) 'कार्यस्य कारणस्य च यत्र विरोधः परस्परं गुणयोः। तद्वत्क्रिययोरथवा संजायेतेति तद्विषमम् ॥' अत्र निष्ठुरत्वतापत्वमृदुत्वशैत्यगुणविरोधः' इति **साहित्यविद्याधरी**। २ 'अत्रानुप्रासोपमालंकारो' इति **साहित्यविद्याधरी**। ३ 'अत्र काव्यलिङ्गमलंकारः' इति **साहित्यविद्याधरी**।

'अपि'शब्दान्ममापि विरहालेषु प्रसिद्धेषु कुलायकुलेषु स्वकृतनीडतटेषु विलुठ्य लुठित्वा । पूर्वश्लोकार्थानुवादः ॥ १४१ ॥

इति प्रियां प्रत्युक्त्वा सुतान्प्रत्याह—

**सुताः! कमाहूय चिराय चुंकृतैर्विधाय कम्प्राणि मुखानि कं प्रति ।**
**कथासु शिष्यध्वमिति प्रमील्य सः स्रुतस्य सेकाद्बुबुधे नृपाश्रुणः १४२**

**सुता इति** ॥ हे सुताः पुत्राः! जननीं मां च विना चुंकृतैः शिशुपक्षिसूक्ष्मशब्दविशेषैश्चिराय कमाहूयाकार्य भक्ष्यं याचयिष्यथ । कं प्रति कम्प्राणि चलानि मुखानि विधाय गोष्ठीः कथयिष्यथ, अपि तु न कमपि प्रति । उभयोर्मृतत्वात् । शिशुपक्षिणामियं जातिः । एवं सति परं पूर्वकथासु शिष्यध्वं कथाशेषी भविष्यथेत्युक्त्वा स हंसः प्रमील्य मूर्च्छां प्राप्य स्रुतस्य कारुण्याद्गलितस्य नृपाश्रुणो नृपनेत्रबाष्पस्य सेकात्सेचनाद्बुबुधे । भक्ष्ययाचनं गोष्ठीकरणं च कवेरुक्तिः, न तु हंसस्य । तस्य वचः 'आहूय विधाये'त्येतदन्तम् । शोकवशात्खण्डोक्तिः करुणारसपोषिका । गोष्ठीषु विषये चतुरा भविष्यथेति पितरं मातरं च विना युष्मान् वक्तुमपि कः शिक्षयेदिति वाक्यशेषो वा । शिष्यध्वमिति कर्मकर्तरि प्राप्तकाले लोटस्त्वङ् । एवमहमपि कथासु शिष्ये इत्युत्तरं चापि ज्ञेयम्[2] ॥ १४२ ॥

**इत्थममुं विलपन्तममुञ्चद्दीनदयालुतयावनिपालः ।**
**रूपमदर्शि धृतोऽसि यदर्थं गच्छ यथेच्छमथेत्यभिधाय ॥ १४३ ॥**

**इत्थमिति** ॥ अवनिपालो राजा दीनेषु दयालुस्तस्य भावस्तत्ता तया इत्यभिधायोक्त्वा इत्थं पूर्वोक्तप्रकारेण विलपन्तं विलापं कुर्वन्तममुं हंसममुञ्चदत्यजत् । इतीति किम्—हे हंस! यदर्थं धृतोऽसि तद्रूपमदर्शि दृष्टम् । अथातःपरं त्वं यथेच्छं स्वेच्छया गच्छ । यदर्थं 'धृतोऽसि' इत्यादिना 'धिगस्तु तृष्णा—' ( नै० १।१३० ) इत्यादि परिहृतम् । 'स्पृहिगृहि—' ( ३।२।१५८ ) इत्यालुच्पि दयालुः । दोधकं वृत्तम्[3] ॥ १४३ ॥

**आनन्दजाश्रुभिरनुस्रियमाणमार्गान्प्राक्शोकनिर्गमितनेत्रपयःप्रवाहान्**
**चक्रे स चक्रनिभचङ्क्रमणच्छलेन नीराजनां जनयतां निजबान्धवानाम्**

**आनन्देति** ॥ स हंसः चक्रनिभं चक्राकारं चङ्क्रमणं भ्रमणं तस्य छलेन व्याजेन नीराजनामारार्तिकां जनयतां कुर्वतां निजबान्धवानां स्वीयमित्राणां प्राक्स्वग्रहणसमये शोकेन निर्गतान्नेत्रपयःप्रवाहान्बाष्पप्रवाहान् स्वमुक्तिसमये आनन्दजाश्रुभिरानन्दजनितबाष्पैरनुस्रियमाणमार्गाननुगम्यमानमार्गांश्चक्रे । धृते हंसे रुरुदुः, मुक्ते जहृषुरित्यर्थः । बद्धमुक्तं पक्षिणं वेष्टयित्वा पक्षिणो भ्रमन्ति रुदन्ति चेति पक्षिजातिः । अन्यस्यापि कारागृहादिबद्धविमुक्तस्यानन्दाश्रुसहितैर्बान्धवैर्नीराजना क्रियते । चङ्क्रमणमिति क्रमेर्गतिकौटिल्ये । यङन्ताद्भावे ल्युट् । वलयाकारापि गतिः कुटिलैव ।

---

१ 'अत्र विरोधाभासोऽलंकारः' इति साहित्यविद्याधरी । २ 'अत्र जातिरलंकारः' इति साहित्यविद्याधरी । 'प्रायेणात्र समासोक्तिरुक्ता' इति जीवातुः । ३ 'अत्रानुप्रासोपमालंकारः' इति साहित्यविद्याधरी ।

'यञोऽचि च' ( २।४।७४ ) इति चकारादन्यत्रापि यङो लुक्। सर्वसर्गसमाप्तिश्लोकेषु 'आनन्द'पदप्रयोगादानन्दाङ्कमिदं काव्यम्। वसन्ततिलकावृत्तम् ॥ १४४ ॥

**श्रीहर्षं कविराजराजिमुकुटालंकारहीरः सुतं**
**श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।**
**तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महा-**
**काव्ये चारुणि नैषधीयचरिते[1] सर्गोऽयमादिर्गतः ॥ १४५ ॥**

**श्रीहर्षमिति** ॥ श्रीहीरनामा पिता मामल्लदेवी माता च यं श्रीहर्षनामानं पुत्रं सुषुवे। किंभूतः श्रीहीरः—कविराजानां राजिः पङ्क्तिस्तस्या मुकुटानामलंकाररूपो हीरो हीराख्यं रत्नम्। किंभूतम्—जितेन्द्रियचयं जित इन्द्रियचय इन्द्रियसमूहो येन। तस्य श्रीहर्षस्य चिन्तामणिमन्त्रस्य चिन्तनमनुध्यानं जपादिकं तस्य फले शृङ्गारभङ्ग्या शृङ्गाररचनाविशेषेण चारुणि रमणीये शृङ्गाररसप्रधाने नैषधीयं नलसंबन्धि चरितं चरित्रं यस्मिन्नेवंविधे महाकाव्येऽयमादिः प्रथमः सर्गो गतः समाप्तः। चिन्तामणिमन्त्रचिन्तनसामर्थ्यादेवंविधं काव्यं कृतमिति भावः। शार्दूलविक्रीडितं वृत्तम्। नैषधसंबन्धि नैषधीयम् 'वृद्धाच्छः' ( ४।२।११४ )। छन्दांस्यलंकाराश्चात्र नोक्ताः, लक्षणग्रन्थगौरवभयात्। ते तु सुधिया ग्रन्थान्तराज्ज्ञातव्याः ॥ १४५ ॥

**इति श्रीवेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृतौ**
**नैषधीयप्रकाशे प्रथमः सर्गः समाप्तः ॥**

---

## द्वितीयः सर्गः।

हंसमुखेन भैमीवर्णनार्थं द्वितीयं सर्गमारभते—

**अधिगत्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः।**
**वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः[2] ॥ १ ॥**

**अधिगत्येति** ॥ अथ मोचनानन्तरं स द्विजो हंसः तमानन्दं लोकोत्तरं हर्षमविन्दत लेभे। तं कम्—य आनन्दो वचसामपि गोचरो विषयो न। वर्णयितुमशक्य इत्यर्थः। किं कृत्वा—ततस्तस्माज्जगत्याः पृथ्व्या अधीश्वरात्स्वामिनः पुरुषोत्तमात्पुरुषश्रेष्ठान्नलान्मुक्तिं मोचनमधिगत्य प्राप्य। यथा द्विजो ब्राह्मणो जगति लोके अधीश्वरात्सर्वोत्कृष्टात्पुरुषोत्तमाच्छ्रीविष्णोः सकाशात्तत्प्रसादान्मुक्तिं मुक्तिसाधनं संसारमोचनं च ज्ञानं प्राप्य वागगोचरम्, 'अपि'शब्दान्मनसोऽप्यगोचरमानन्दं ब्रह्मस्वरूपं प्राप्नोति। 'यतो वाचो निवर्तन्ते' ( तैत्ति० २।४ ) इति, 'आनन्दं ब्रह्मणो रूपम्' इति च श्रुतेः। ज्ञानान्मोक्ष इति। 'जगती जगति छन्दोविशेषेऽपि क्षितावपि', 'दन्तविप्राण्डजा द्विजाः' इत्यमरः। 'न निर्धारणे'

---

१ 'अत्रानुप्रासाप्रस्तुतिजात्यलंकारसंसृष्टिः' इति साहित्यविद्याधरी। २ 'नैषधस्य चरिते' इति पाठः साहित्यविद्याधरीसंमतः। ३ 'अत्रानुप्रासरूपकालंकारौ' इति साहित्यविद्याधरी।

( २।२।१० ) इति निषेधात् षष्ठीसमासो न । पुरुषेषूत्तम इति निर्धारणसप्तमीसमास एव । स्वरविशेषदर्शनात् । लाभार्थो विदिः स्वरितेत् । मुचादिः । सर्गेऽस्मिन् 'अश्रान्त-' ( नै० २।१०२ ) इति यावत् वैतालीयं छन्दः ॥ १ ॥

**अधुनीत खगः स नैकधा तनुमुत्फुल्लतनूरुहीकृताम् ।**
**करयन्त्रणदन्तुरान्तरे व्यलिखच्चञ्चुपुटेन पक्षती ॥ २ ॥**

**अधुनीतेति** ॥ स खगो हंसस्तनुं शरीरं नैकधा नैकप्रकारमधुनीताकम्पयत् । किंभूतां तनुम्—उत्फुल्लानि विकसितानि तनूरुहाणि रोमाणि यस्यां सा, अनुत्फुल्लतनूरुहा उत्फुल्लतनूरुहा कृता ताम् । च्विः । तथा,—चञ्चुपुटेन पक्षती पक्षमूले व्यलिखत् समीचकार । किंभूते पक्षती—करयन्त्रणेन नलहस्तनियमनेन धारणेन दन्तुरं निम्नोन्नतमन्तरं मध्यं ययोस्ते । ( उत्फुल्लेति ) 'उत्फुल्लसंफुल्लयोरुपसंख्यानम्' ( वा० ४८४३ ) इति साधुः । दन्तुरेति 'दन्त उन्नत उरच्' ( ५।२।१०६ ) । अत्र तून्नतत्वमात्रम् । पक्षती इत्यत्र 'पक्षात्तिः' ( ५।२।२५ ) इति [2]तिः ॥ २ ॥

**अयमेकतमेन पक्षतेरधिमध्योर्ध्वगजङ्घमङ्घ्रिणा ।**
**स्खलनक्षण एव शिश्रिये द्रुतकण्डूयितमौलिरालयम् ॥ ३ ॥**

**अयमिति** ॥ अयं हंसः स्खलनक्षण एव मोचनसमय एवालयं नीडं शिश्रियेऽभजत् । किंभूतः—पक्षतेः पक्षमूलस्याधिमध्यं मध्ये ऊर्ध्वगोर्ध्वगामिनी जङ्घा यस्मिन्कर्मणि तद्यथा तथा एकतमेनैकेनाङ्घ्रिणा चरणेन धृतं शीघ्रं कण्डूयितो मौलिर्मस्तकं येन । हंसजातिः । एकतमेनेति 'स्वार्थेऽपि तमबादयः' इति वचनात्तमप् ॥ ३ ॥

**स गरुद्वनदुर्गदुर्ग्रहान्कटु कीटान्दशतः सतः क्वचित् ।**
**नुनुदे तनुकण्डु पण्डितः पटुचञ्चूपुटकोटिकुट्टनैः ॥ ४ ॥**

**स इति** ॥ स हंसः पटु कीटाद्यपनयने समर्थं चञ्चूपुटं तस्य कोटिरग्रभागस्तेन कुट्टनानि घट्टनानि तैः कीटान् तनुकण्डु तन्वी स्वल्पा कण्डूर्यस्यां क्रियायां यथा तथा नुनुदे स्फोटयामास । किंभूतः—पण्डितः कण्डूयने कुशलः । किंभूतान्—गरुद्वनं पक्षवृन्दं तल्लक्षणं दुर्गं तत्र दुर्ग्रहान्धर्तुमशक्यान् । अत एव—कटु तीक्ष्णं पीडाकारि यथा तथा दशतः खादतः । तथा,—क्वचिन्निर्हारयितुमशक्ये शरीरे देशे सतो विद्यमानान् । अन्योऽपि पर्वतदुर्गदुर्ग्रहानुपद्रवकारकान्मारणेन नुदति । नुनुदे इति स्वरितेत्त्वादात्मनेपदम् ॥ ४ ॥

---

१ 'अत्रानुप्रासश्लेषालंकारौ' इति साहित्यविद्याधरी । 'अत्राभिधायाः प्रकृतार्थमात्रनियन्त्रणादुभयश्लेषानुपपत्तेर्भेदान्तरानवकाशाल्लक्षणायाश्च मुख्यार्थबाधमन्तरेणासंभवाद्ध्वनिरेवायम् । ब्राह्मणस्य विष्णोर्मोक्षानन्दप्राप्तिलक्षणार्थान्तरप्रतीतेर्न श्लेषः प्रकृताप्रकृतोभयगतः । अस्मिन्सर्गे एकशतश्लोकपर्यंतं वियोगिनीवृत्तम् । '-"विषमे ससजा गुरुस्समे सभरा लोऽथ गुरुर्वियोगिनी"-' इति जीवातुः । २ 'अत्र स्वभावोक्तिरलंकारः' इति जीवातुसाहित्यविद्याधर्यौ । ३ 'अत्रापि स्वभावोक्तिरलंकारः' इति साहित्यविद्याधरी । ४ 'अत्र स्वभावोक्तिः श्लेषालंकारौ । शब्दालंकारस्तु छेकानुप्रासः' इति साहित्यविद्याधरी ।

**अयमेत्य तडागनीडजैर्लघु पर्यव्रियताथ शङ्कितैः ।**
**उदडीयत वैकृतात्करग्रहजादस्य विकस्वरस्वरैः ॥ ५ ॥**

**अयमेत्येति ॥** अयं हंसस्तडागस्य नीडजाः पक्षिणस्तैरेत्यागत्य लघु शीघ्रं पर्यव्रियत वेष्टितः । अथानन्तरमस्य करग्रहजान्नलस्य हस्तग्रहणजाताद्वैकृताद्विकाराच्छङ्कितैस्त्रस्तैः अत एव विकस्वरस्वरैरुच्चस्वरैः पक्षिभिरुदडीयत उड्डीनम् । एषा पक्षिजातिः । वैकृतं दन्तुरपक्षत्वात् । तीर्थादौ करग्रहणार्थं कैश्चित्कश्चन परितो वेष्ट्यते । अथ बलिग्रहणजातकलहादेः शङ्कितैरुच्चैः स्वरैर्गम्यते । 'लघु क्षिप्रम्' इत्यमरः । वैकृतात् । स्वार्थेऽण् 'स्थेशभास–' ( ३।२।१७५ ) इति वरचि विकस्वरः ॥ ५ ॥

**वहतो बहुशैवलक्ष्मतां धृतरुद्राक्षमधुव्रतं खगः ।**
**स नलस्य ययौ करं पुनः सरसः कोकनदभ्रमादिव ॥ ६ ॥**

**वहत इति ॥** स खगो हंसः सरसः सकाशान्नलस्य करं पुनर्ययौ । कस्मादिव—कोकनदभ्रमादिव रक्तोत्पलभ्रान्तेरिव । सरसः पल्वलस्य कोकनदभ्रमादिवेति वा । नलकरस्य रक्तत्वात्कोकनदभ्रान्तिः । रक्तोत्पलं च हंसानां प्रियमित्युत्प्रेक्षा । किंभूतस्य नलस्य सरसश्च—बहूनि शिवसंबन्धीनि लक्ष्माणि त्रिपुण्ड्रादीनि यस्य तस्य भावस्तत्ता तां वहतो धारयतः । शिवे भक्तिर्येषां ते शैवाः, तत्संबन्धीनि वा । सरःपक्षे—बहूनि शैवलानि यस्यां सा बहुशैवला क्ष्मा पृथ्वी यस्मिंस्तस्य भावस्तत्ता तां वहतः । शिवं कल्याणं तत्संबन्धीनि शुभसूचकानि लक्ष्माणि सामुद्रिकोक्तानि मत्स्यादीनि यस्येति वा । किंभूतं करम्—धृतं रुद्राक्षाणां मधुतुल्यं समीचीनं ( वा ) व्रतं नियमो येन, शैवत्वाद्रुद्राक्षा एव मधुव्रता भ्रमरा येनेति वा । रुद्राक्षधारणं नियमेन करोति, अन्यचिह्नधारणे नियमो नेति न पौनरुक्त्यम् । कोकनदमपि रुद्राक्षसदृशभ्रमरयुक्तम् । न क्षमन्त इत्यक्षमाः, रुद्रस्य अक्षमाः । कर्मषष्ठ्या समासः । तान्धुनोति कम्पयति रुद्राक्षमधु तच्च तद्व्रतं च । धृतं तद्येनेति वा । शिवद्रोहिपराभवकारिणमित्यर्थः । अनेन पौनरुक्त्यशङ्कापि निरस्ता । रवणं रुत् धृता रुद्यैस्ते धृतरुतः सशब्दाः, रः अग्निस्तद्वदक्षीणि पिङ्गलानि नेत्राणि येषां ते राक्षाः एवंभूता भ्रमरा यत्रेति वा । अर्थात्कोकनदविशेषणम् । 'र'शब्दोऽग्निवाची आगमशास्त्रे । तथा 'रः पावके च तीक्ष्णे च' इति विश्वः । शैवेत्यत्र 'तस्येदम्' ( ४।३।१२० ) इति 'भक्तिः' ( ४।३।९५ ) इति वाण् । रुदिति संपदादित्वात्क्विप् । राक्षेति 'बहुव्रीहौ सक्थ्यक्ष्णोः–' (५।४।११३) इति षच् । रुद्राक्षमान् धूनोतीति दीर्घान्तात् 'क्विप् च' ( ३।२।७६ ) इति क्विप् । व्रतविशेषणत्वान्नपुंसकत्वाद्ध्रस्वत्वम् ॥ ६ ॥

**पतगश्चिरकाललालनादतिविश्रम्भमवापितो नु सः ।**
**अतुलं विदधे कुतूहलं भुजमेतस्य भजन्महीभुजः ॥ ७ ॥**

**पतग इति ॥** एतस्य महीभुजो राज्ञो भुजं भजन्नाश्रयन् स पतगो हंसः अतुल-

---

१ 'अत्र जातिश्छेकानुप्रासश्चालंकारः । करग्रहजादिति श्लिष्टम्' इति साहित्यविद्याधरी । २ 'दधतः' इति मल्लिनाथसंमतः पाठः । ३ 'अत्र 'बहुशैवल—' इत्यादौ शब्दश्लेषः, तदनुप्राणिता 'रुद्राक्षमधुव्रतम्' इत्युपमागतोत्प्रेक्षा, तत्सापेक्षा चेयं कोकनदभ्रमादिव इत्युत्प्रेक्षेति संकरः' इति जीवातुः । ४ 'किम्' इति मल्लिनाथसंमतः पाठः ।

मनुपमं कुतूहलं विदधे चकार । पुनरागमनं कौतूहले हेतुः । 'नु' वितर्के । चिरकालं लालनात्सान्त्वनादतिविश्रम्भमतिविश्वासमवापितः प्रापित इव । अनु पश्चादेतस्य भुजं भजन्निति वा । 'सन्' इति पाठे अवापितः सन् । अनु पश्चात् । अन्योऽपि बहुकालं पोषितो विश्वासं प्राप्तः स्वामिनं स्वगुणेन कुतूहलिनं करोति ॥ ७ ॥

**नृपमानसमिष्टमानसः स निमज्जत्कुतुकामृतोर्मिषु ।**
**अवलम्बितकर्णशष्कुलीकलसीकं रचयन्नवोचत ॥ ८ ॥**

**नृपेति** । इष्टं मानसं सरो यस्य स हंसः अवोचदुवाच । किं कुर्वन्—कुतुकामृतोर्मिषु कौतूहललक्षणामृततरङ्गेषु निमज्जद्बुडन्नृपमानसं नलान्तःकरणमवलम्बिते कर्णशष्कुल्यावेव कलस्यौ येन एवंविधं रचयन् । सावधानं कुर्वन्नित्यर्थः । राज्ञो मनः स्ववचनश्रवणोत्सुकं कुर्वन्नुवाचेति भावः । अन्योऽप्यूर्मिषु मज्जत इष्टस्य कलसमवलम्बनं दत्ते । कर्णाकारो वाद्यविशेषः शष्कुली । मन एव मानसम् । प्रज्ञादित्वादण् । 'मानसं सरसि स्वान्ते,' 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले' इति विश्वः । कलसीकम् 'नद्यृतश्च' ( ५।४।१५३ ) इति कप् । 'न कपि' ( ७।४।१४ ) इति ह्रस्वनिषेधः ॥ ८ ॥

किमवोचदित्याह—

**[1]मृगया न विगीयते नृपैरपि धर्मागममर्मपारगैः ।**
**स्मरसुन्दर! मां यदत्यजस्तव धर्मः स दयोदयोज्ज्वलः ॥ ९ ॥**

**मृगयेति** ॥ धर्मागमा धर्मशास्त्राणि तेषां मर्म रहस्यं तस्य पारं गच्छन्तीत्येवंभूतैरपि नृपै राजभिर्मन्वादिभिः मृगया पापर्द्धिः न विगीयते निन्द्यते, अपि तु क्रियत एव । एवं सत्यपि हे स्मरवत्सुन्दर! त्वं मां यदत्यजः स तव दयोदयोज्ज्वलो धर्मः दयाया उदयेनोत्पत्त्या उज्ज्वलः शोभमानः । सदयः सन् अयः शुभावहविधिर्यस्य । उपकरिष्यमाणत्वात् । तथा,—दयोज्ज्वल इति वा । दयोदयेन सह वर्तमानः । अत एव उज्ज्वल इति वा । मन्मोचने दयां विनान्यत्कारणं नास्तीत्यर्थः । 'स्मर' इति भिन्नम् । हे सुन्दर! त्वं स्मर विचारय । वाक्यार्थः कर्म । नृपैः क्रियमाणा मृगया धर्मागममर्मपारगैरपि न निन्द्यत इति वा । पारगैः 'अन्तात्यन्ताध्व—' ( ३।२।४८ ) इति डः ॥ ९ ॥

मृगयाया अनिन्दने कारणमाह—

**[2]अबलस्वकुलाशिनो झषान्निजनीडद्रुमपीडिनः खगान् ।**
**[3]अनवद्यतृणार्दिनो मृगान्मृगयाघाय न भूभुजां घ्नताम् ॥ १० ॥**

**अबलेति** ॥ मृगया भूभुजां राज्ञामघाय पापाय न भवति । कथमित्यत आह—किंभूतानां भूभुजाम्—अबलं निर्बलं स्वकुलं च तदश्नन्त्येवंशीलान्झषान्मीनान्

१ 'अत्रोत्प्रेक्षावृत्त्यनुप्रासयोः शब्दार्थालंकारयोस्तिलतण्डुलवत्संसृष्टिः । "एकद्वित्र्यादिवर्णानां पुनरुक्तिर्भवेद्यदि । संख्यानियममुल्लङ्घ्य वृत्त्यनुप्रास ईरितः ॥"—' इति जीवातुः । २ 'अत्रानुप्रासरूपकावलंकारौ । अमृतमिति श्लिष्टम्' इति साहित्यविद्याधरी । ३ 'अत्र काव्यलिङ्गमलंकारः' इति साहित्यविद्याधरी ।

घ्नतां मारयताम् । तथा,—निजाः स्वीया ये नीडद्रुमा निवासस्थानवृक्षास्तान्पीडयन्त्येवंशीलान्खगान्पक्षिणो घ्नताम् । तथा,—अनवद्यं निरपराधं तृणं तद् अर्दन्ति पीडयन्त्येवंशीलान्मृगान् घ्नताम् । 'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः' (मनु० १।४९) इति स्मृतेस्तरुणतृणादेरपि प्राणित्वात्तद्वधस्तु दोषाय । परं दुष्टनिग्रहो राज्ञां धर्म एवेति भावः । अबलान्बलिनो भक्षयन्तीति मत्स्यानां जातिस्वभावः । अवद्येति 'अवद्यपण्य—' ( ३।१।१०१ ) इति साधुः । पश्चाद्बहुव्रीहिस्तत्पुरुषो वा । पूर्वश्लोके मृगयादोषाभावे स्मृतिं प्रमाणमुक्त्वाऽत्र युक्तिमप्यवदत् ॥ १० ॥

**यद्वादिषमप्रियं तव प्रियमाधाय नुनुत्सुरस्मि तत् ।**
**कृतमातपसंज्वरं तरोरभिवृष्यामृतमंशुमानिव ॥ ११ ॥**

**यदिति** ॥ हे राजन्! अहं तव यदप्रियं निन्दाद्यवादिषमुक्तवानस्मि प्रियमाधाय कृत्वा तदप्रियं नुनुत्सुर्निराकर्तुमिच्छुरस्मि । तत्र दृष्टान्तमाह—अंशुमान्सूर्यः स्तरोर्वृक्षस्य आतपेन कृतं संज्वरं पीडाममृतं जलमभिवृष्याभितो वर्षित्वा यथा नुदतीत्यर्थः । अनेन दृष्टान्तेनातिशयितं प्रियं करिष्यामीति सूच्यते ॥ ११ ॥

**उपनम्रमयाचितं हितं परिहर्तुं न तवापि सांप्रतम् ।**
**करकल्पजनान्तराद्विधेः शुचितः प्रापि स हि प्रतिग्रहः ॥ १२ ॥**

**उपेति** ॥ अयाचितमप्रार्थितमुपनम्रमुपस्थितं हितं प्रियं परिहर्तुं त्यक्तुं तवापि सार्वभौमस्यापि न सांप्रतं न युक्तम् । हि यतः करकल्पम् ईषदसमाप्तः करः जनान्तरं अन्यो जनो मल्लक्षणः, करकल्पं जनान्तरं यस्यैवंविधाच्छुचितो निर्मलाच्छोभनाद्विधेर्दैवात्स प्रतिग्रहस्त्वया प्रापि प्राप्तः । सर्वं हि शुभाशुभं दैवात्प्राप्यते । यद्दैववशाद्भवति तत्केनापि निराकर्तुं न शक्यते । करेण हि दीयते । यद्वा,-विधेर्दैवस्य हस्तभूताज्जनान्तरादेतादृशः प्रतिग्रहो राज्ञो दोषाय न । 'अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः' ( आचारा० श्लो० २१५ ) इति याज्ञवल्क्यः ॥ १२ ॥

स्वगर्वं परिहरति—

**पतगेन मया जगत्पतेरुपकृत्यै तव किं प्रभूयते ।**
**इति वेद्मि न तु त्यजन्ति मां तदपि प्रत्युपकर्तुमर्तयः ॥ १३ ॥**

**पतगेनेति** ॥ पतगेन पक्षिणा मया जगत्पतेर्भुवनाधिपतेस्तव नलस्योपकृत्यै उपकाराय प्रभूयते किं समर्थेन भूयते, अपि तु न; इति यद्यपि वेद्मि जानामि तदपि तथापि प्रत्युपकर्तुं प्रत्युपकारार्थं अर्तयः कथमस्योपकरोमीत्युत्कण्ठादरः, पीडा वा मां न तु नैव त्यजन्ति । असमर्थमपि प्रेरयन्तीत्यर्थः ॥ १३ ॥

१ 'अत्रानुप्रासकाव्यलिङ्गक्रियादीपकालंकारः । काव्यलिङ्गे अबलस्वकुलाशिनः इत्यादिना विशेषणद्वारेण पदार्थगत्या हेतुरुक्तः, अत्र घ्नतामिति क्रियापदत्वात्क्रियादीपकम्' इति साहित्यविद्याधरी । २ 'अभिवर्ष्य' इति मल्लि० पाठः । ३ अत्र बिम्बप्रतिबिम्बभावेन दृष्टान्तोपमापरिवृत्त्योऽलंकाराः' इति साहित्यविद्याधरी । ४ 'अत्र काव्यलिङ्गमलंकारः' इति साहित्यविद्याधरी । ५ 'अत्रानुप्रासो हेतुश्चालंकारौ' इति साहित्यविद्याधरी ।

उपकर्तुं शक्यते न वेति विचारो माऽस्तु, किं तूपकर्तुः प्रत्युपकर्तव्यमेवेति विधिरस्तीत्याह—

**अचिरादुपकर्तुराचरेदथ वात्मौपयिकीमुपक्रियाम् ।**
**पृथुरित्थमथाणुरस्तु सा न विशेषे विदुषामिह ग्रहः ॥ १४ ॥**

**अचिरादिति** ॥ 'अथवा' पक्षान्तरे । यः पुरुषः कश्चनोपकर्तुरुपकारकस्यात्मौपयिकीमात्मोपायभूतामात्मोपायादागताम् । आत्मोपायसाध्यामित्यर्थः । एवंभूतामुपक्रियामुपकारमचिराज्झटिति आचरेत्कुर्यात् । जीवनस्य सत्वरत्वात् 'चिरात्' इत्युक्तम् । इत्थं विधौ सति सा उपक्रिया पृथुर्महती, अथ अथवा अणुः अल्पा वास्तु तिष्ठतु । इह इति विशेषे महत्त्वाल्पत्वलक्षणे विदुषां ज्ञातॄणां ग्रहो निर्बन्धो नास्ति । उपकारस्य महत्त्वात् स्वौद्धत्यपरिहार एव तात्पर्यम् । उपाय एवौपयिकीति विनयादिषु 'उपायाद्ध्रस्वत्वं च' (ग० सू० १४४) इति पाठात्स्वार्थे ठकि तदन्तात् 'तत आगतः' ( ४।३।७४ ) इत्यणन्तत्वाद्वा ङीप् ह्रस्वत्वं च । 'युक्तमौपयिकं लभ्यम्' इत्यमरः ॥ १४ ॥

वचनप्रसङ्गार्थमाह—

**भविता न विचारचारु चेत्तदपि श्रव्यमिदं मदीरितम् ।**
**खगवागियमित्यतोऽपि किं न मुदं धास्यति कीरगीरिव ॥ १५ ॥**

**भवितेति** ॥ यद्यपि इदं मदीरितं मद्वचनं विचारचारु विचारविषये मीमांसासहं चेन्न भविता भविष्यति । अहं लोकोत्तरमुपकारं करिष्यामीति सत्यमेव, तथापि त्वं मिथ्या चेन्मन्यसे, तथापि मदीयं वचः श्रव्यं श्रवणार्हं भवत्येव । विचारचारु चेन्न कथं श्रव्यमित्याशङ्कायामाह—इयं खगवाक् पक्षिणो वाक् पक्षी मनुष्यवाचा वदतीत्यतोऽपि हेतोर्मद्वचनं किं मुदं संतोषं न धास्यति करिष्यति, अपि तु करिष्यत्येव । इष्टसाधकत्वात्' अपिः' एवार्थः । केव—शुकवागिव । श्रव्यम् अर्हार्थे 'अचो यत्' ( ३।१।९७ ) इति यत्, 'सार्वधातुकार्धधातुकयोः' ( ७।३।८४ ) इति गुणः, 'धातोस्तन्निमित्तस्यैव' ( ६।१।८० ) इति वान्तादेशः ॥ १५ ॥

तदेवाह—

**स जयत्यरिसार्थसार्थकीकृतनामा किल भीमभूपतिः ।**
**यमवाप्य विदर्भभूः प्रभुं हसति द्यामपि शक्रभर्तृकाम् ॥ १६ ॥**

**स इति** ॥ 'किल' प्रसिद्धौ । स भीमसंज्ञको भूपती राजा जयति सर्वोत्कर्षेण वर्तते । किंभूतः—अरिसार्थे वैरिसमूहे सार्थकीकृतमन्वर्थकीकृतं नाम स्वसंज्ञा येन । बिभ्यत्यस्माद्वैरिणः ( नत्वन्ये, इति ) भीमः । 'भीमादयोऽपादाने' ( ३।४।७४ ) इति साधुत्वम् । स कः—विदर्भभूर्वैराडभूः यं पतिमवाप्य शक्रभर्तृकामपीन्द्रपतिकामपि द्यां दिवं हसति । तत्तुल्या भवतीत्यर्थः । शक्नुते तपस्विभ्योऽपीति शक्रस्तद्भर्तृका द्यौः, अहं तु भीमभर्तृकेति हासहेतुः । शक्यते जेतुमिति वा । तस्मात्कोऽपि

---

१ पृषोदरादित्वं कल्पनीयमणन्तत्वपक्षे । २ 'अत्र छेकानुप्रासोऽप्रस्तुतप्रशंसा चालंकारौ' इति साहित्यविद्याधरी । ३ 'श्राव्यम्' इति मल्लिनाथसंमतः पाठः । ४ 'अत्रानुप्रासोपमालंकारौ' इति साहित्यविद्याधरी ।

न बिभेतीति । अर्थेन सह वर्तमानं सार्थकम् 'तेन सहेति तुल्ययोगे' ( २।२।२८ ) इति बहुव्रीहिः, 'वोपसर्जनस्य' (६।३।८२) इति सः, 'शेषाद्विभाषा' (५।४।१५४) इति कप्। ततश्चिवः। शक्रभर्तृकाम् 'नद्यृतश्च' (५।४।१५३) इति कप् ॥ १६ ॥

भैम्या लोकोत्तरे गुणोत्कर्षे मिथ्यात्वनिरासार्थं पुराणप्रसिद्धमितिहासं सूचयन्नाह—

**दमनादमनाक्प्रसेदुषस्तनयां तथ्यगिरस्तपोधनात्।**
**वरमाप स दिष्टविष्टपत्रितयानन्यसदृग्गुणोदयाम् ॥ १७ ॥**

**दमनादिति** ॥ हे राजन्! स भीमः दमनादेतन्नाम्नस्तपोधनादृषेर्वरदानसमर्थाद् अमनाक् अत्यर्थं प्रसेदुषः प्रसन्नात्तथ्यगिरोऽप्रतारकादेवंभूतात् तनयां वरं कन्यालक्षणमभीप्सितमाप प्राप्तवान्। किंभूताम्—दिष्टः कालः विष्टपं भुवनमनयोस्त्रितये कालत्रये, भुवनत्रये चानन्यसदृगन्यसदृशो न भवत्येवंभूतः सौन्दर्यौदार्यादिगुणोदयो यस्यास्ताम्। भूतभविष्यद्वर्तमानकाले लोकत्रयेऽपीदृक्सौन्दर्यादिगुणवती कापि नास्तीति भावः। दिष्टस्तेनैव मुनिना दत्तो विष्टपत्रितयेऽनन्यसदृशो गुणोदयो यस्यै तामिति वा। 'कालो दिष्टः' इत्यमरः। दमनात् 'सहितपिदमः संज्ञायाम्' (ग०सू०२३) इति ल्युः। प्रसेदुषः प्र—सदो लिटः 'भाषायां सदवसश्रुवः' (३।२।१०८) इति क्वसुः। अनन्यसदृक् 'सर्वनाम्नो वृत्तिमात्रे' (वा०१३७६) इति पुंवद्भावः ॥१७॥

**भुवनत्रयसुभ्रुवामसौ दमयन्ती कमनीयतामदम्।**
**उदियाय यतस्तनुश्रिया दमयन्तीति ततोऽभिधां दधौ ॥ १८ ॥**

**भुवनेति** ॥ यतो यस्मात्कारणादसौ भीमतनया भुवनत्रये सुभ्रुवः सुन्दर्यस्तासां कमनीयतया यो मदः सौन्दर्येण यो गर्वस्तं तनुश्रिया शरीरसौन्दर्येण दमयन्ती ग्लपयन्ती शमयन्ती वोदियायोत्पन्ना। ततस्तस्मात्कारणात् 'दमयन्ती' इत्यभिधां सार्थकं नाम दधौ बभार। 'भूसूधूभ्रस्जिभ्यश्छन्दसि' इति क्युनि साधितस्य 'भुवन'शब्दस्य बाहुलकाद्भाषायां प्रयोगः। 'अणावकर्मकात्—'( १।३।८८ ) इति कर्त्रभिप्राये क्रियाफले यत् परस्मैपदं विहितं तस्यैव 'न पादमि—' ( १।३।८९ ) इत्यादिना निषेधादणावकर्मकत्वे च तत्रैव चित्तवत्कर्तृकत्वाभावात्तेन परस्मैपदाप्राप्तेर्निषेधाशङ्काया अभावाच्चाकर्त्रभिप्राये यथाप्राप्तं परस्मैपदं भवत्येवेति दमयन्तीत्यत्र शता युज्यते ॥ १८ ॥

**श्रियमेव परं धराधिपाद्गुणसिन्धोरुदितामवेहि ताम्।**
**व्यवधावपि वा विधोः कलां मृडचूडानिलयां न वेद कः ॥ १९ ॥**

**श्रियमिति** ॥ हे राजन्! त्वं तां भैमीं श्रियमेव लक्ष्मीमेवावेहि जानीहि। परमयं विशेषः—गुणसिन्धोर्गुणसमुद्राद्धराधिपात्पृथ्वीपतेरुदितामुत्पन्नाम्। लक्ष्मी समुद्रादुत्पन्ना, इयं तु गुणसमुद्राद्राज्ञ इति विशेषः। अप्रसिद्धस्य ज्ञापनं क्रियते, न तु प्रसिद्धस्येत्याह—'वा' प्रसिद्धौ। व्यवधिर्व्यवधानं तस्यां सत्यामपि मृडो महादेव-

१ 'अत्रानुप्रासोपमालंकारौ' इति साहित्यविद्याधरी। 'अत्र विदर्भभुवो दुहासासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः' इति जीवातुः। २ 'अत्रानुप्रासव्यतिरेकालंकारौ' इति साहित्यविद्याधरी। ३ 'अत्रोत्प्रेक्षालंकारः' इति साहित्यविद्याधरी। ४ 'व्यवधि'शब्दस्य स्त्रीत्वे मानाभावेन तस्यामिति व्याख्यानमसंगतम्।

स्तस्य चूडा मौलिः सा निलयः स्थानं यस्याः सा तां विधोश्चन्द्रस्य कलां को न वेद जानाति, अपि तु सर्वोऽपि । ईश्वरस्याप्रत्यक्षत्वेऽपि तन्मौलिस्थितां चन्द्रकलां सर्वोऽपि वेत्ति, तथा व्यवधानेऽपि त्वमपि तां वेत्सीति भावः । इणो लोटि हेर-पित्त्वाद्गुणाभावे एजादित्वाभावाद् 'एत्येधति—' ( ६।१।८९ ) इति वृद्ध्यभावेन 'आद्गुणः' ( ६।१।८७ ) । आङ्प्रश्लेषेऽपि 'ओमाङोश्च' ( ६।१।९५ ) इति पररूपप्राप्तेः 'अवेहि' इत्येव रूपम् ॥ १९ ॥

**चिकुरप्रकरा जयन्ति ते विदुषी मूर्धनि साबिभर्ति यान् ।**
**पशुनाप्यपुरस्कृतेन तत्तुलनामिच्छतु चामरेण कः ॥ २० ॥**

**चिकुरेति** ॥ हे राजन्! ते चिकुरप्रकराः केशसमूहा जयन्ति सर्वोत्कर्षेण वर्तन्ते । ते के—सा विदुषी पण्डिता भैमी यांश्चिकुरप्रकरान् ( मूर्धनि ) आबिभर्ति धारयति आभरणं करोति वा । चामरेण साम्ये सति सर्वोत्कृष्टत्वं कथमित्यत आह— पशुना चमरसंज्ञकेनाप्यपुरस्कृतेन चामरेण तत्तुलनां तेषां केशानां तुलनां साम्यं क इच्छतु । न कोऽपि । चमराणां हीनस्थानधारणात्तत्तुलना नास्ति । अथ च ज्ञात्रा ये मस्तके ध्रियन्ते पूज्यन्ते तेषां मूर्खेणाप्यपूजितेनासता सह साम्यं कोऽभिलष्येत् । अतस्तत्केशानां सर्वोत्कर्षता । विदुषीति 'विदेः शतुर्वसुः' ( ७।१।३६ ) 'उगितश्च' ( ४।१।६ ) इति ङीप् 'वसोः संप्रसारणम्' ( ६।४।१३१ ) । तुलनाम् 'ण्यास—' ( ३।३।१०७ ) इति युच् । संज्ञापूर्वकविधेरनित्यत्वाल्लघूपधगुणाभावे ॥ २० ॥

**स्वदृशोर्जनयन्ति सान्त्वनां खुरकण्डूयनकैतवान्मृगाः ।**
**जितयोरुदयत्प्रमीलयोस्तदखर्वेक्षणशोभया भयात् ॥ २१ ॥**

**स्वदृशोरिति** ॥ हे राजन्! मृगाः खुरेण कण्डूयनं कण्डूपनयनं तदेव व्याजस्तस्मात्स्वदृशोः स्वनेत्रयोः सान्त्वनामाश्वासनं जनयन्ति कुर्वन्ति । यतस्तस्या भैम्या अखर्वेक्षणशोभया विशालनेत्रशोभया जितयोः पराभूतयोः । अत एव भयादिवोदयत्प्रमीलयोर्जायमानतन्द्रीकयोः । लुप्तोत्प्रेक्षा । यथा केनचिज्जितं भीतमन्यमपि कश्चित् करपरामर्शादिना सान्त्वयति तथा मृगा अपि स्वनेत्रे सान्त्वयन्ति । 'तन्द्री प्रमीला' इत्यमरः । 'खर्वो ह्रस्वश्च वामनः' इत्यमरः । उदयदिति 'इ गतौ' ॥ २१ ॥

---

१ 'अत्र रूपकमाक्षेपश्चालंकारौ । आक्षेपलक्षणं रुद्रटेन ( काव्या० ८।८९ ) उक्तम्— 'वस्तु प्रसिद्धमिति यद्विरुद्धमिति वास्य वचनमाक्षिप्य । अन्यत्तथात्वसिद्ध्यै यत्र ब्रूयात्स आक्षेपः' इति **साहित्यविद्याधरी** । 'यथा हरशिरोगतापि कला चन्द्रकलैव तथा भीमभवनोदिताप्येषा श्रीरेवेति सौन्दर्यातिशयोक्तिः । अत्र श्रीकलयोर्नृपमृडौ वाक्यद्वये बिम्बप्रतिबिम्बभावेन सामान्यधर्मवत्तया निर्दिष्टा इति दृष्टान्तालंकारः । '-"यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते । सामान्यधर्मः शास्त्रज्ञैः स दृष्टान्तो निगद्यते" इति लक्षणात्' इति **जीवातुः** । २ 'अत्रातिशयोक्तिव्यतिरेकालंकारौ' इति **साहित्यविद्याधरी** । 'अत्र न तुलनानिषेधस्यापुरस्कृतपदार्थहेतुकत्वात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः '-"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्" इति लक्षणात्' इति **जीवातुः** । ३ 'अत्र समासोक्तिरपह्नुतिश्चालंकारौ' इति **साहित्यविद्याधरी** । 'अत्र कैतव-शब्देन कण्डूयनमपह्नुत्य सान्त्वनारोपादपह्नवभेदः' इति **जीवातुः** ।

**अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि।**
**श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापते!॥ २२॥**

**अपीति** ॥ हे धरापते पृथ्वीपते! दमस्वसुर्भैम्या लोकयुगमपि मातृकुलपितृकुललक्षणं श्रुतिगामितया लोकाकर्णनविषयत्वेन जगत्प्रसिद्धत्वेन सुतरां व्यतिभाते। परस्परोत्कर्षेण विनिमयेन वा भासत इत्यर्थः। इदं भैमीमातृकुलमिति जगद्विख्यातत्वम्। तेन भैमीमातृकुलस्य शोभनं तद्भैमीपितृकुलेनाङ्गीकृतम्। एवं भैमीपितृकुलमिदमिति जगद्विख्याततत्वम्। तेन भैमीपितृकुलस्य शोभनं तद्भैमीमातृकुलेनाङ्गीकृतमिति विनिमयः। भैमीसंबन्धेन पितृकुलवन्मातृकुलं मातृकुलवत्पितृकुलं शोभते। सादृश्यं तु तात्पर्यार्थः। तच्च सादृश्यं श्रुतिगामितया विशेष्यते। तच्च श्रुतिगामित्वलक्षणं सादृश्यं मातृकुलस्य पितृकुलापेक्षया पितृकुलस्य च मातृकुलापेक्षतया नतु दृगाद्यपेक्षया। एवं दृगादीनामपि सजातीयापेक्षयैव श्रुतिगामित्वलक्षणं सादृश्यमङ्गीकरणीयं नतु लोकयुगाद्यपेक्षया। तथा,—दमस्वसुर्दृशावपि नेत्रे अपि श्रुतिगामितया आकर्णदेशविशालत्वेनातितरां विनिमयेन भाते शोभेते इति द्विवचनम्। दक्षिणनयनस्य श्रुतिगामित्वेन या शोभा तां वामनयनमङ्गीकरोति। वामनयनस्य च श्रुतिगामित्वेन या शोभा तां दक्षिणनयनमङ्गीकरोतीत्यत्रापि विनिमयः। श्रुतिगामित्वेन दक्षिणं वाममिव वामं दक्षिणमिवेत्यत्रापि सादृश्य एव तात्पर्यं ज्ञेयम्। तस्या दमस्वसुः संबन्धी श्रुतदृष्टाः श्रुताः पुराणादौ, दृष्टाः कासुचित्सुन्दरीषु। यद्वा,—कासुचित्स्त्रीष्वेव श्रुताः कासुचिद्दृष्टा रमणीगुणाः स्त्रीगुणाः श्रुतिगामितया लोकाकर्णनविषयत्वेन व्यतिभाते विनिमयेन शोभन्त इति बहुवचनम्। पुराणादावन्यस्त्रीषु वा ये श्रुतास्ते कासुचिद्दृष्टास्ते भैम्यामेव श्रूयन्त इति श्रुतानां दृष्टानां च स्त्रीगुणानां दमस्वसुः संबन्धिनां सर्वेषां श्रुतिगामित्वं विद्यते। ततः श्रुतानां स्त्रीगुणानां दमस्वसुः संबन्धिनां यच्छ्रुतिगामितया शोभनं तद्दृष्टैरङ्गीकृतम्। एवं दृष्टानां शोभनं तच्छ्रुतैरङ्गीकृतमित्यत्रापि यथाकथंचिद्विनिमयः। यथा श्रुता भैमीसंबन्धिनः श्रुतिगामितया शोभन्ते तथा दृष्टा अपि भैमीसंबन्धिनः श्रुतिगामितया शोभन्त इत्यत्रापि सादृश्य एव तात्पर्यम्। श्रुतदृष्टा अपि सर्वे गुणा भैम्यां विद्यन्त इति भावः। सामुद्रिकशास्त्रे श्रुतानां पद्मिन्यादौ दृष्टानामिति वा यथाकथंचिज्ज्ञेयम्, विस्तरभयान्न लिख्यते। 'श्रुतिः स्तोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि' इति विश्वः। गामी गम्यादि। आवश्यके ताच्छील्ये वा णिनिः। 'त्वतलोः'—( वा० ३९२७ )इति पुंवत्। व्यति–पूर्वस्य भातेः 'कर्तरि कर्मव्यतिहारे' ( १।३।१४ ) इत्यात्मनेपदम्। द्विवचने सवर्णदीर्घत्वे कृते, बहुवचने च 'आत्मनेपदेष्वनतः' ( ७।१।५ ) इति झस्यादादेशे शब्लुक्[1] टेरेत्वं सर्वत्र। वचनश्लेषः[2] ॥ २२ ॥

---

१ शपि विद्यमाने अदादेशस्याप्राप्त्या पूर्वं शपो लुक्, ततो झस्यादेशो बोध्यः।

२ 'अत्र वचनश्लेषक्रियाकारकदीपकसंसृष्टिः' इति साहित्यविद्याधरी। 'अत्र लोकयुगादीनां त्रयाणामपि प्रकृतत्वात्केवलप्रकृतविषयतुल्ययोगिताभेदः। '-"प्रस्तुताप्रस्तुतानां च केवलं तुल्यधर्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगिता॥" इति लक्षणात्' इति जीवातुः।

**नलिनं मलिनं विवृण्वती पृषतीमस्पृशती तदीक्षणे ।**
**अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम् ॥ २३ ॥**

**नलिनमिति** ॥ तदीक्षणे भैमीनेत्रे पृषतीमञ्जनशलाकामस्पृशती अप्राप्तिं अञ्जनानञ्चिते सती नलिनं कमलं मलिनं स्वकान्त्या दूषितं विदधाते कुर्वाते । किंभूते तदीक्षणे—विवृण्वती आत्मानं प्रकाशयन्ती प्रसारयन्ती । ऋजुरीत्या विलोकमाने । अञ्जनाञ्चिते अञ्जनपूजिते साञ्जने सती तदीक्षणे खञ्जनमपि खञ्जरीटमपि रुचिगर्वेण कान्तिमदेन दुर्विधं दरिद्रं विदधाते । अवतंसीकृतं कमलं कटाक्षावलोकनप्रसृतया स्वकान्त्या मलिनं श्यामं विवृण्वती कुर्वती, तथा,—पृषती हरिणीमस्पृशती नेत्रविषयेऽगणयन्ती एवंविधे भैमीनेत्रे कज्जलाञ्चिते खञ्जनमिति पूर्ववत् । अञ्जनपूजनात्पूर्वं स्वकान्त्या कमलं जितं, हरिणीनेत्रयोस्तु भैमीनेत्रशोभासंभावनापि नास्ति । अञ्जनपूजनानन्तरं खञ्जनस्य मन्नेत्रसदृशे नान्यस्येति गर्वस्तद्रहितं कुर्वाते इत्यर्थ इति वा, रुचि कान्तिविषये दर्पेण रहितमिति वा । 'रुचि' इति भिन्नं पदम् । खञ्जनो हि शुक्लकृष्णोऽतिसरलोऽतिचञ्चलश्च । अतस्तेन साम्यसंभावनायां कज्जलदानानन्तरं तदधिककान्तित्वात् सोऽपि जित इति भावः । मलिनं स्वगतं श्यामं गुणं विलोकनवशाद्विवृण्वती प्रकाशयन्ती नलिनं रुचिगर्वदुर्विधं विदधाते इति वा, मलिनं श्यामं नलिनं नीलोत्पलं रुचिगर्वदुर्विधं विदधाते इति वा । सविलासवीक्षणदशायाः पूर्वमेव नीलोत्पलं जितमित्यर्थः । तथा—असंकुचती सती पृषतीं हरिणीं श्यामं नलिनं नीलोत्पलं रुचिगर्वदुर्विधं विदधाते, निर्निमेषत्ववेलायामपि नाभ्यां हरिणी जिता किं पुनः कटाक्षविक्षेपवेलायामिति वा । अस्मिन्पक्षे दुर्विधा च दुर्विधश्चेति 'नपुंसकमनपुंसकेन—' ( १।२।६९ ) इति नपुंसकै(कशेषै)कवद्भावौ । अज्यतेऽनेनेत्यञ्जनं तेन पूजिते इत्यनेन ल्युडन्तस्य 'अञ्जू व्यक्ति(गतिकान्ति)म्रक्षणेषु' इति धातोरर्थानुसारेण दृशोः स्निग्धनीलरक्तसितवर्णकान्तिचाञ्चल्ययोगः सूचितः । तथा च नलिनादिषु मध्ये कचित्कस्यचिद्गुणस्य सत्त्वाद्दृशोस्तु पूर्वोक्तगुणसद्भावात्ताभ्यां नलिनादीनि जितानीति भावः । 'मलिनं दूषिते कृष्णे' इति विश्वः । अञ्चिते 'अञ्चेः पूजायाम्' इतीटि 'नाञ्चेः पूजायाम्' ( ६।४।३० ) इति नलोपनिषेधः । **'अञ्जनाञ्जिते'** इति पाठे 'अजि भासि' इति चौरादिकस्याञ्जयतेर्निष्ठा । अञ्जनेन भासिते इत्यर्थः ॥ २३ ॥

**अधरं किल बिम्बनामकं फलमस्मादिति भव्यमन्वयम् ।**
**लभतेऽधरबिम्बमित्यदःपदमस्या रदनच्छदं वदत् ॥ २४ ॥**

**अधरमिति** ॥ हे राजन् ! अस्या दमयन्त्या रदनच्छदमधरमोष्ठं वदद‍भिदधत्

---

१ 'अत्र छेकानुप्रासोऽतिशयोक्तिरलंकारः' इति **साहित्यविद्याधरी** । 'ईक्षणयोर्नलिनमलिनीकरणाद्यसंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः, तया चासमा व्यज्यतेऽलंकारेणालंकारध्वनिः' इति **जीवातुः** । २–३ 'आभ्याम् रदनच्छदे' इति द्विवचनान्तपाठः **साहित्यविद्याधरी**-संमतः । यतो व्याख्यातम्—'रदनच्छदे ओष्ठौ वदत् प्रतिपादयत्' । 'रदनच्छद'शब्दस्य नपुंसकत्वम् । यदुक्तं **प्रतापमार्तण्डाभिधानकोषे**—'गरुत्पक्षच्छदोऽस्त्रियाम्' इति । **'आभ्याम् रदनच्छदे'** इति पाठस्तु सर्वथाऽशुद्धः '—"ओष्ठोऽधरो रदच्छदः' इति पुंलिङ्गनिर्देशात्' इति **सुखावबोधा** । 'आभ्याम्' इति पाठे रदनच्छदौ वददिति युक्तः पाठः । 'छद'शब्दस्य पुंलिङ्गत्वात् 'दलं पर्णं छदः पुमान्' इति **तिलकव्याख्यायामभिहितम्** । रदनच्छदे वदन् 'वद स्थैर्ये' स्थिरीभवन्निति सप्तम्यन्तपाठाङ्गीकारश्च ।

अधरबिम्ब इत्यदःपदमेतत्पदं । सुबन्तोऽयं शब्द इत्यतो हेतोर्भव्यं समीचीनमन्वयं संबन्धं लभते प्राप्नोति । इतीति किम्—किल यस्माद्बिम्बनामकं फलमस्यादोष्ठादधरं हीनम् । बिम्बापेक्षयास्याधिकरक्तत्वादमृतयुक्तत्वाच्च अधरं बिम्बं बिम्बसंज्ञकं फलं यस्मादधरबिम्ब इति बहुव्रीहिः, न त्वधर एव बिम्बमिति । अन्यासां तु अधरो बिम्ब इवेति तत्पुरुषः कर्मधारयः । एतस्यास्तु बहुव्रीहौ अर्थतः शब्दतश्च भव्यत्वम् । भैम्यधरो जितबिम्ब इति भावः ॥ २४ ॥

**हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा ।**
**कृतमध्यबिलं विलोक्यते धृतगम्भीरखनीखनीलिम ॥ २५ ॥**

**हृतेति** ॥ इन्दुमण्डलं चन्द्रबिम्बं वेधसा ब्रह्मणा दमयन्तीवदनाय भैमीमुखं निर्मातुं हृतसारमिव गृहीतश्रेष्ठभागमिव कृतं मध्ये बिलं छिद्रं यस्यैवंभूतं विलोक्यते दृश्यते । तर्क्यत इत्यर्थः । कलङ्केन हृतसारत्वमुत्प्रेक्षितम् । किंभूतम्—धृतो गम्भीरखन्यां निम्नगर्ते परभागस्थितस्य खस्याकाशस्य नीलिमा येन । कलङ्को न भवति, किं त्वाकाशनीलिमा । भैमीमुखं निष्कलङ्कचन्द्रसारतुल्यमिति भावः । वदनाय 'क्रियार्थोपपदस्य च—' ( २।३।१४ ) इति चतुर्थी । खनीति 'कृदिकारादक्तिनः' ( ग० सू० ५० ) इति ङीषे ॥ २५ ॥

प्रकारान्तरेण भैमीमुखस्य चन्द्राधिक्यमाह—

**धृतलाञ्छनगोमयाञ्चनं विधुमालेपनपाण्डुरं विधिः ।**
**भ्रमयत्युचितं विदर्भजाननीराजनवर्धमानकम् ॥ २६ ॥**

**धृतेति** ॥ ब्रह्माज्ञया चन्द्रो भ्राम्यति । तत्रोत्प्रेक्षते,–विधिर्ब्रह्मा विधुं चन्द्रमुचितं योग्यं विदर्भजा भैमी तस्या आननं तस्य नीराजनार्थमारार्तिकार्थं वर्धमानकमिव वर्धमानकं शरावं भ्रमयति । किंभूतं विधुम्—धृतं लाञ्छनमेव कलङ्क एव गोमयाञ्चनं गोमयपूजनं येन । तथा,—आलेपनं पिष्टोदकम् ( 'अईपण' इति लोके प्रसिद्धं ) तेनैव पाण्डुरम् । चन्द्रस्तन्मुखसादृश्यं न प्रापेति भावः । गोमयलिप्तेन चूर्णादिचिह्नेन शरावेण दृष्टिदोषनिरासार्थं नीराजना क्रियत इति लोकाचारः । 'शरावो वर्धमानकः' इत्यमरः ॥ २६ ॥

**सुषमाविषये परीक्षणे निखिलं पद्ममभाजि तन्मुखात् ।**
**अधुनापि न भङ्गलक्षणं सलिलोन्मज्जनमुज्झति स्फुटम् ॥ २७ ॥**

**सुषमेति** ॥ कमलस्य शोभाऽधिका, भैमीवदनस्य वेति सुषमाविषये परमशोभा-

---

१ 'अत्रोत्प्रेक्षालंकारः' इति साहित्यविद्याधरी । 'अत्र दमयन्तीदन्तच्छदस्य बिम्बाधरीकरणासंबन्धेऽपि संबन्धोक्तेरतिशयोक्तिः । पूर्ववद्ध्वनिश्च ।' इति जीवातुः । २ 'अत्रोत्प्रेक्षालंकारः, अनुप्रासश्च' इति साहित्यविद्याधरी । 'अत्र कलङ्कापह्नवत्वेन खनीलिमारोपादपह्नवभेदः । स च कृतमध्यबिलमित्येतत्पदार्थहेतुककाव्यलिङ्गानुप्राणितः । तदपेक्षा चेयं हृतसारमित्युत्प्रेक्षेति संकरः । तथा चोपमा व्यज्यत इति पूर्ववद्ध्वनिः' इति जीवातुः । ३ 'अत्र रूपकं समं चालंकारः । तथा चोक्तम् '—"उपमैव तिरोभूतभेदा रूपकमिष्यते । समं योग्यतया योगो यदि संभावितः क्वचित् ॥"—' इति साहित्यविद्याधरी । 'अत्र विधुतल्लाञ्छनादेर्नीराजनशरावगोमयत्वादित्वेन रूपणात्सावयवरूपकम्' इति जीवातुः ।

विषये परीक्षणे दिव्येन शोधने निखिलं समस्तं पद्मं पद्मजातं तन्मुखाद्भैमीमुखाद्-भाजि पराजयं प्राप्तम् । यतः,—भङ्गलक्षणं पराजयचिह्नं सलिलोन्मज्जनं जलादुन्मज्जनमूर्ध्वभवनमद्यापि नोज्झति स्फुटं व्यक्तमेव न त्यजति । 'स्फुटम्' उत्प्रेक्षे वा । जलोन्मज्जनं तस्य स्वाभाविकं भङ्गलक्षणत्वेनोत्प्रेक्षितम् । स्फुटं विकसितमिति पद्मविशेषणं वा । जलदिव्ये धनुर्धरमुक्तं बाणमादाय यावदन्यो धावन्नागच्छति तावद्यः सलिले निमग्न एव तिष्ठति स विजयते, यस्तु ततः पूर्वमेवोन्मज्जति स पराजयत इति भावः । 'सुषमा परमा शोभा' इत्यमरः । 'सुविनिर्दुर्भ्यः—' (८।३।८८) इति षत्वम् । अभाजीति कर्मकर्तरि चिण्, 'भञ्जेश्च चिणि' (६।४।३३) इति नलोपः ॥ २७ ॥

**धनुषी रतिपञ्चबाणयोरुदिते विश्वजयाय तद्भ्रुवौ ।**
**नलिके न तदुच्चनासिके त्वयि नालीकविमुक्तिकामयोः ॥ २८ ॥**

**धनुषी इति** ॥ तद्भ्रुवौ भैमीभ्रुवौ विश्वजयाय त्रैलोक्यजयाय रतिपञ्चबाणयोर्धनुषी नोदिते प्रादुर्भूते न इति काक्वा । 'नु' इति पाठे वितर्के । तथा,—तस्या भैम्या उच्चनासिके रन्ध्रद्वयोपलक्षिते नासिके त्वयि विषये नालीकौ नलिकाप्रेर्यमाणलघुशरौ तयोर्विमुक्तिकामयोर्नलिके शराधारनलौ न भवतः, अपि तु नलिके एव । तस्या भ्रूनासिकं दृष्ट्वा सर्वोऽपि कामाधीनो भवतीति भावः । 'नालीकः शरशल्ययोः' इति विश्वः । विश्वजयाय 'तुमर्थात्—' (२।३।१५) इति चतुर्थी । कामयोरिति 'शीलिकामिभक्ष्याचरिभ्यो णः' (वा० १९८०) ॥ २८ ॥

**सदृशी तव शूर ! सा परं जलदुर्गस्थमृणालजिद्भुजा ।**
**अपि मित्रजुषां सरोरुहां गृहयालुः करलीलया श्रियः ॥ २९ ॥**

**सदृशीति** ॥ हे शूर ! सा भैमी परं केवलं तव सदृशी योग्या । किंभूता—जललक्षणं दुर्गं तत्र तिष्ठन्ति जलदुर्गस्थानि मृणालानि जयत इति जितौ भुजौ यस्याः सा । मृणालादपि कोमलौ (गौरौ च) तद्भुजौ इत्यर्थः । तथा,—करलीलया हस्तविलासेन मित्रं सूर्यं, सुहृदं च जुषन्ते सेवन्ते मित्रजुषि तेषाम् । विकसितत्वात् सश्रीकाणामपि सरोरुहां कमलानां श्रियो गृहयालुर्ग्रहीतुकामा । त्वमपि जलदुर्गस्थवैरिजिद्भुजः सत्सुहृदां सत्सहायानामपि वैरिणां संपदः करलीलया बलिक्रियया । गृहयालुरिति शूरत्वादुभयोः साम्यम् । 'अपिः' अन्यच्च इत्यर्थे वा । 'मित्रं सुहृदि मित्रोऽर्के', 'बलिहस्तांशवः कराः', 'लीला विलासक्रिययोः' इत्यमरः । गृहेश्चौरादिण्यन्तात् 'स्पृहिगृहि—' (१।४।३६) इत्यादिनालुचि 'अयामन्ता—' (६।४।५५) इत्ययादेशे गृहयालुः । तद्योगे 'न लोका—' (२।३।६९) इति षष्ठीनिषेधाच्छ्रिय इति द्वितीया ॥ २९ ॥

---

१ 'अत्रानुमानमतिशयोक्तिरलंकारौ' इति साहित्यविद्याधरी । 'उन्मज्जनक्रियानिमित्तेयं भङ्गोत्प्रेक्षा' इति जीवातुः । २ 'अत्र भ्रुवोः कार्मुकत्वेन रूपणात् तथा नासिकाया नलिकात्वेन संभावनात् रूपकोत्प्रेक्षालंकारौ' इति साहित्यविद्याधरी । ३ 'अत्र समश्लेषालंकारसंकरः' इति साहित्यविद्याधरी । 'सा दमयन्ती शूरस्य तव परमत्यन्तं सदृशी अनुरूपेत्युपमालङ्कारः ।' इति जीवातुः ।

**वयसी शिशुतातदुत्तरे सुदृशि स्वाभिविधिं विधित्सुनी ।**
**विधिनापि न रोमरेखया कृतसीम्नी प्रविभज्य रज्यतः ॥ ३० ॥**

**वयसी इति** ॥ हे राजन्! तस्यां सुदृशि सुनयनायां स्वाभिविधिं निजाभिव्याप्तिं विधित्सुनी कर्तुकामे, अहमेव सर्वात्मना इमामभिव्याप्य तिष्ठामीति बाल्यं मन्यते, एवं तारुण्यमपि; एवंभूते शिशुता च तदुत्तरं शिशुताया बाल्यतः परं तारुण्यं च वयसी न रज्यतः, अपि तु रज्यत एव संतुष्यत एव । बाल्यतारुण्ये तस्यां तिष्ठत इत्यर्थः । वयःसंधौ वर्तमाना इति यावत् । किंभूते वयसी—विधिना ब्रह्मणा उदरे वर्तमानया रोमरेखया प्रविभज्य समं विभागं कृत्वा कृतसीम्नी कृतमर्यादे अपि । एवंविधे विभज्य न रज्यतः, किं तर्हि संवलिते एवानुरागं भजत इति वा । बाल्यं वर्तते, रोमरेखोद्भवेन च तारुण्यं प्राप्तमित्युभे संवलिते एव तिष्ठतः । रम्यत्वाद्बाल्यं त्यक्तुं न शक्नोति, तारुण्यं, चागन्तुमिच्छतीति भावः । विधिना शास्त्रोक्तमार्गेण रेखया कृतसीम्न्यपि सस्याधिकायां भुवि 'मदीयेयं मदीयेयम्' इति कौचिद्विवदेते ॥ ३० ॥

**अपि तद्वपुषि प्रसर्पतोर्गमिते कान्तिझरैरगाधताम् ।**
**स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ ॥ ३१ ॥**

**अपीति** ॥ उभौ कुचौ स्तनौ तद्वपुषि प्रसर्पतोः प्लवमानयोः क्रीडतोर्द्वयोः स्मरयौवनयोः कामतारुण्ययोः प्लवकुम्भौ (प्लवनार्थं कुम्भौ) तरणकुम्भौ भवतः । 'खलु' उत्प्रेक्षायाम् । किंभूते तद्वपुषि—कान्तिझरैः कान्तिप्रवाहैरगाधतामतलस्पर्शत्वं गमिते प्रापितेऽपि । अगाधे ह्रदके क्रीडाऽनुचिता, तत्रापि क्रीडतोरिति द्योतनार्थम् 'अपि'शब्दः । पूर्वापेक्षया 'अपिः' अन्यच्च इत्यर्थे वा । अगाधे ह्रदके क्रीडतोर्द्वयोर्घटद्वयेन भाव्यम् । यद्यपि द्विवचनेनैव द्वयोः, उभौ इति च लभ्यते तथापि सदाप्रहवासित्वपरस्परमिलितत्वप्रदर्शनार्थमुक्तमित्यवगन्तव्यम् ॥ ३१ ॥

**कलसे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः ।**
**स तदुच्चकुचौ भवन्प्रभाझरचक्रभ्रममातनोति यत् ॥ ३२ ॥**

**कलस इति** ॥ न्यायशास्त्रे–'समवायिकारणमसमवायिकारणं निमित्तकारणं चेति; यत्समवेतमेव कार्यमुत्पद्यते तत्समवायिकारणं, यथा मृत्पिण्डो घटस्य' । तत्र पूर्वश्लोके कुम्भत्वारोपणेन तदुभयसाम्यमसहमानः कविः प्रभागुणाधिकत्वप्रतिपादनेन तयोरुत्कृष्टतामारोपयितुं हंसमुखेनापूर्वामुक्तिभङ्गिं प्रणीतवान् । असंभाव्यवस्तु-

---

१ 'अत्रोक्तनिमित्ता विशेषोक्तिरलंकारः । तथा च काव्यप्रकाशः ( १०।१६३ )—"-'विशेषोक्तिरखण्डेषु कारणेषु फलावचः" । अत्र च रोमरेखया विधिनापि कृतसीमात्वकरणे सत्यपि प्रविभागस्थितिः कार्यं नोक्तम् । अत्र वस्त्वभिविधिविधानेच्छा निमित्तमुक्तम्' इति **साहित्यविद्याधरी** । 'अत्र प्रस्तुतवयोर्विशेषसाम्यादप्रस्तुतविवादप्रतीतेः समासोक्तिरलंकारः' इति **जीवातुः** । २ 'अत्र कुचयोः कुम्भत्वसंभावनेनोत्प्रेक्षालंकारः, न रूपकम् । तथा च **काव्यप्रकाशः** ( १०।१३७ )—'-"संभावनमथोत्प्रेक्षा प्रकृतस्य परेण यत् ।" खलु-शब्द उत्प्रेक्षाव्यञ्जकः, अतिशयोक्तिरिति वा' इति **साहित्यविद्याधरी** । 'अत्र कुचयोः स्मरयौवनप्लवनकुम्भत्वोत्प्रेक्षया तयोरौत्कट्यं कुचयोश्चातिवृद्धिर्व्यज्यत इत्यलंकारेण वस्तुध्वनिः' इति **जीवातुः** ।

दर्शने परसंमतिप्रश्ने 'किमु'शब्दः । हे राजन् ! चक्रभ्रमं करोत्येवंशीलश्चक्रभ्रमकारी तस्य भावश्चक्रभ्रमकारिता तल्लक्षणो गुणः स्वभावः ( यः ) कलसे घटे दृश्यते स निजस्य स्वस्य घटस्य हेतुर्निमित्तकारणं दण्डस्तस्माज्जातः किमु । समवायिकारणगुणः कार्ये गुणमारभते, न निमित्तगुणः । अत्र तु निमित्तगुणः कार्ये गुणमारभत इति असंभाव्यमेतत्त्वया कुत्रचिद्दृष्टमिति प्रश्नार्थः किमु, मया तु दृष्टः । कुत्रेत्यपेक्षायामाह—यद्यस्मात्स कलसस्तस्या भैम्या उच्चकुचौ भवन्नुच्चस्तनतां प्रपद्यमानः प्रभाझरेण दीप्तिसमूहेन चक्रभ्रमं कुलालचक्रभ्रमणमर्थाद्दृष्टेः करोति । सुन्दरवस्तुदर्शनेन दृष्टेर्भ्रमणं भवति । सूर्याद्यालोकावलोकनवत् । अथ च स तदुच्चकुचौ भवन्दीप्तिसमूहेन चक्रस्य राष्ट्रस्य, लोकसमूहस्य वा भ्रमं मदजनितं मोहमातनोति । सर्वोऽपि स्तनकान्तिदर्शनेन कामान्धो भवतीति भावः । अथ च कान्तिप्रवाहे चक्रवाकभ्रान्तिमातनोति । ( कान्ति )प्रवाहे चक्रवाका भवन्ति ( भ्रमन्ति ) अतो भ्रमकारणत्वाच्छब्दच्छलाच्चक्रभ्रमकारितागुणो घटे विद्यते । तुङ्गत्वेन कान्तिमत्त्वेन च तत्कुचौ घटचक्रवाकतुल्याविति भावः । निजः सहजश्चासौ हेतुश्च । समवायिकारणमिति यावत् । तादृशो न भवतीति अनिजहेतुर्निमित्तकारणं तादृशाद्दण्डाज्जातः किमु इत्युत्प्रेक्षा, आक्षेपो वा । दण्डगुणः कलसे विद्यत इत्यत्र किं प्रमाणमित्याशङ्कायां शब्दच्छलेनाह—स इति । ... यस्मादिति वा इति यथामति व्याख्येयम् । 'चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः । ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपि' इति विश्वः ॥ ३२ ॥

**भजते खलु षण्मुखं शिखी चिकुरैर्निर्मितबर्हगर्हणः ।**
**अपि जम्भरिपुं दमस्वसुर्जितकुम्भः कुचशोभयेभराट् ॥ ३३ ॥**

**भजत इति** ॥ 'खलु' उत्प्रेक्षे । दमस्वसुः चिकुरैः केशैर्निर्मिता कृता बर्हगर्हणा पिच्छभारतिरस्कारो यस्य स शिखी मयूरः षण्मुखं कार्तिकेयं भजते सेवते । प्रसङ्गत एतदुक्तम् । तथा, दमस्वसुः कुचशोभया स्तनभारेण जितौ गण्डौ यस्य स इभराट् करिणां राजा ऐरावतोऽपि जम्भारिमिन्द्रं सेवते । भैम्याः केशसाम्यं स्तनसाम्यं च देवाराधनेन प्राप्तुकामौ वैरनिर्यातनार्थं वा तौ भजत इति भावः । अधिकेन जितोऽन्यमधिकं भजते । चिकुरैरिति बहुवचनेनैव बहुत्वं सूचयित्वा 'षण्मुख'पदप्रयोगेण षण्मुखत्वात्स्कन्दस्य केशसंभावनया तत्प्राप्त्यर्थं शिखिनः स्कन्दाश्रयणं युक्तम् । 'जभि जृभि गात्रविनामे' जम्भते गात्रविनामं करोतीति जम्भस्तद्रिपु-

---

१ 'अनुमानमलंकारः, स तदुच्चकुचौ भवन्निति रूपकम् । कुचकलसदर्शनाच्चक्रवाकभ्रान्तिजननाद्भ्रान्तिमानप्यलंकारो भवति' इति **साहित्यविद्याधरी** । 'अत्र समवायिकारणगुणा रूपादयः कार्ये संक्रामन्ति, न निमित्तगुणा इति तार्किकसमये स्थिते गुण इति चक्रभ्रम इति चोभयत्रापि वाच्यप्रतीयमानयोरभेदाध्यवसाय एव । स तदुच्चकुचौ भवन् इति कुचकलसयोरभेदातिशयोक्त्युत्थापिता झरचक्रभ्रमात्मकक्रियानिमित्ता कुचात्मनि कलसे कार्ये चक्रभ्रमकारितालक्षणनिमित्तकारणगुणसंक्रमलक्षणेनोत्प्रेक्षेति संक्षेपः । तार्किकसमये विरोधाद्विरोधाभासोऽलंकारः इति । केश्चिदुक्तं, तदत्यन्ताश्रुतचरमलंकारपारदृश्वानः शृण्वन्तु' इति **जीवातुः** ।

जम्भादधिकः। अत एव सेव्यते। अस्या गात्रविनामकारिणी कुचशोभा जम्भतुल्येति हेतोस्तदधिकमिन्द्रं सेवते इति ॥ ३३ ॥

**उदरं नतमध्यपृष्ठतास्फुटदङ्गुष्ठपदेन मुष्टिना।**
**चतुरङ्गुलमध्यनिर्गतत्रिवलिभ्राजि कृतं दमस्वसुः ॥ ३४ ॥**

**उदरमिति** ॥ हे राजन्! दमस्वसुर्भैम्या उदरं मुष्टिना कृतम्। विधिनेत्यर्थात्। किंभूतेन मुष्टिना—नतो नम्रो मध्यो यस्यैवंविधं पृष्ठं यस्योदरस्य तस्य भावस्तत्ता तया स्फुटत्प्रकटीभवदङ्गुष्ठपदमङ्गुष्ठस्थानं यस्य तेन। किंभूतमुदरम्—चतसृणामङ्गुलीनां मध्यान्निर्गतास्तिस्रो वलयस्ताभिर्भ्राजते तच्छीलम्। पृष्ठमध्ये निम्नत्वमङ्गुष्ठनिवेशात्। उदरे त्रिवलियुक्तत्वं चतुरङ्गुलिधारणात् चतसृणां त्रीण्येवान्तराणि भवन्ति। चतुरङ्गुलमिति 'तत्पुरुषस्य—' (५।४।८६) ईत्यच् ॥ ३४ ॥

प्रकारान्तरेणोदरमेव वर्णयति—

**उदरं परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किमु।**
**धृततच्चतुरङ्गुलीव यद्वलिभिर्भाति सहेमकाञ्चिभिः ॥ ३५ ॥**

**उदरमिति** ॥ कोऽपि कुतुकी दमस्वसुरुदरं मुष्टिना इयत्तया परिमाति व्यवच्छिनत्ति। 'किमु' उत्प्रेक्षे। यद्यस्मात्तदुदरं सहेमकाञ्चिभिः सुवर्णमेखलासहिताभिर्वलिभिः कृत्वा धृतास्तस्य मुष्टेश्चतस्रोऽङ्गुलयो येन एवंविधमिव भाति। तिस्रो वलयश्चतुर्थी हेमकाञ्ची च। चतस्रोऽङ्गुलयस्तस्य मुष्टेरित्यर्थः। को ब्रह्मा। 'अपिः' एवार्थः। ब्रह्मैवेत्यर्थः ॥ ३५ ॥

**पृथुवर्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया।**
**विधिरेकचक्रचारिणं किमु निर्मित्सति मान्मथं रथम् ॥ ३६ ॥**

**पृथ्विति** ॥ विधिर्ब्रह्मा मान्मथं कामसंबन्धिनं रथं निर्मित्सति निर्मातुमिच्छति। 'किमु' उत्प्रेक्षायाम्। किंभूतो विधिः—मिहिरः सूर्यस्तस्य स्यन्दनो रथस्तस्य शिल्पं निर्माणं तस्य शिक्षयाऽभ्यासेन पृथुं महान्तं वर्तुलं तस्या भैम्या नितम्बं करोतीति कृत्। किंभूतं रथम्—एककेनासहायेन चक्रेण चरति एवंशीलम्। सूर्यरथैकचक्रनिर्माणाभ्यासेन ब्रह्मणा भैमीनितम्बः कृतः, स कामरथत्वेनोत्प्रेक्षितः। नितम्बदर्शनान्मदनप्रादुर्भावो भवतीति भावः। निर्मित्सति। माङः 'सनि मीमा—' (७।४।५४) इत्यादिना अच इस्, 'अत्र लोपोऽभ्यासस्य' (७।४।५८) ॥ ३६ ॥

---

१ 'अत्रोत्प्रेक्षा दीपकं चालंकारः' इति साहित्यविद्याधरी। 'अत्र शिल्प्यैरावतयोः षण्मुखजम्भारिभजनस्य जितबर्हत्वजितकुम्भत्वपदार्थहेतुकत्वात्तद्धेतुके काव्यलिङ्गे। तदसंबन्धेऽपि संबन्धाभिधानादतिशयोक्तिश्च' इति जीवातुः। २ 'यत्तूक्तं वामनेन—'—"त्रिवली-शब्दः सिद्धः संज्ञा चेत्" इति सूत्रेण सप्तर्षय इत्यादिवत् '-"दिक्संख्ये संज्ञायाम्" (२।१।५०) इति संज्ञायां द्विगुरिति तदपि चेत् करणसामर्थ्यात्, त्रिवलय इति बहुवचनप्रयोगदर्शने स्थितं गतिमात्रं, न सार्वत्रिकमिति प्रतीमः' इति जीवातुः। ३ 'अत्र काव्यलिङ्गरूपकालंकारः' इति साहित्यविद्याधरी। 'उत्प्रेक्षा' इति जीवातुः। ४ 'अत्रोत्प्रेक्षोपमा चालंकारः' इति साहित्यविद्याधरी। 'अत्रोत्प्रेक्षयोर्हेतुहेतुमद्भूतयोरङ्गाङ्गिभावेन सजातीयः संकरः' इति जीवातुः। ५ 'अत्रोत्प्रेक्षालंकारः' इति साहित्यविद्याधरी।

**तरुमूरुयुगेन सुन्दरी किमु रम्भां परिणाहिना परम्।**
**तरुणीमपि जिष्णुरेव तां धनदापत्यतपःफलस्तनीम् ॥ ३७ ॥**

**तरुमिति** ॥ हे राजन्! सुन्दरी भैमी परिणाहिना विशालेनोरुयुगेनोरुद्वयेन तरुं वृक्षरूपां रम्भां कदलीं परं केवलं जिष्णुर्जयनशीलेति किमु वक्तव्यम्। अपि त्वेवं न वाच्यम्। किंतु तरुणीमपि तां रम्भामप्सरोविशेषमपि जिष्णुरेव। किंभूताम्—धनदापत्यस्य कुबेरपुत्रस्य नलकूबरस्य तपसः फलं स्तनौ यस्याः। यदर्थं नलकूबरेण तपः कृतं तां रम्भाम्। कदलीमप्यूरुयुगेन जितवतीत्यर्थः। द्वयेन द्वयं जितम्। 'परिणाहो विशालता' इत्यमरः। 'रम्भा कदल्यप्सरसोः' इति विश्वः। 'न लोका—' ( २।३।६९ ) इति निषेधात्तरुमिति द्वितीया। सुन्दरी। गौरादित्वान्ङीष् ॥ ३७ ॥

**जलजे रविसेवयेव ये पदमेतत्पदतामवापतुः।**
**ध्रुवमेत्य रुतः सहंसकीकुरुतस्ते विधिपत्रदंपती ॥ ३८ ॥**

**जलजे इति** ॥ ये जलजे कमले रवेः सूर्यस्य सेवयेवैतस्या भैम्याः पदतां चरणत्वं पदमुत्तमस्थानं, व्याजं चावापतुः प्रापतुरिति ध्रुवम्। उत्प्रेक्षते—विधिपत्रदंपती ब्रह्मवाहनपक्षिजायापती हंसस्त्रीपुंसौ कर्तारौ ते जलजे कर्मणी एत्यागत्य रुतः शब्दाद् ध्रुवं निश्चयेन सहंसकीकुरुतः हंसकसहिते कुरुतः। हंसरवतुल्याच्छिञ्जितादेते सहंसे इत्यनुमीयत इत्यर्थः। हंसकः पादकटकस्तत्सहिते नूपुरयुक्ते कुरुतः। विधिहंसमिथुनमेतन्नूपुरत्वेन परिणतमित्यर्थः। रविसेवया पद्मयोर्भैमीपदत्वप्राप्तिः। विधिसेवया हंसानामेतच्चरणस्थानप्राप्तिरित्यर्थः। विधिपत्रदंपती ये पद्मे एत्य रुतः शब्दं कुरुतः। 'रु शब्दे'। तथा सहंसे कुरुत इति वा। कमलस्य हंससंयोगो युक्तः। भैमीपदयोः पद्मादप्युत्कृष्टत्वाद्धंसरवसमानशिञ्जितयोगाच्चेयमुत्प्रेक्षा। सुन्दरे सुकुमारे च सृजता ब्रह्मणा स्वीयहंसमिथुनमेव तद्भूषणत्वेन कल्पितम्, तादृशस्यान्यस्य भूषणस्याभावादिति च ध्वनिः। 'हंसकः पादकटकः' इत्यमरः। पक्षे, 'शेषाद्विभाषा' ( ५।४।१५४ ) इति कप्, ततश्च्विः। रुत इति पक्षे संपदादि[2] ॥ ३८ ॥

**श्रितपुण्यसरःसरित्कथं न समाधिक्षपिताखिलक्षपम्।**
**जलजं गतिमेतु मञ्जुलां दमयन्तीपदनाम्नि जन्मनि ॥ ३९ ॥**

**श्रितेति** ॥ जलजं कमलं दमयन्ती(न्त्याः)पदमेव चरण एव नाम यस्यैवंभूते जन्मनि जन्मान्तरे मञ्जुलां रम्यां गतिं गमनं पुण्यलोकप्राप्तिरूपां दशां च कथं न एतु प्राप्नोतु। किंभूतम्—श्रितानि पुण्यानि श्रेयस्कारीणि सरांसि, श्रेयस्कारिण्यो नद्यश्च येन तत्। तथा,—समाधिना मुकुलीभावेन सम्यगाधिना क्षपिता अतिवाहिता अखिलाः क्षपा रात्रयो येन। अन्योऽपि सेवितपुण्यतीर्थः समाधिना योगाङ्गेनातिवाहितसमस्तरात्रिर्जन्मान्तर उत्तमां दशां प्राप्नोति तद्वद्भैमीपदप्राप्तिर्जलजस्य[3] ॥ ३९ ॥

---

१ 'अत्रोत्प्रेक्षालंकारः। रम्भा-शब्दः श्लिष्टः फलशब्दोऽपि' इति **साहित्यविद्याधरी**।
२ 'अत्र हंस-शब्दवाच्यात्तथा शिञ्जितसंभवाच्चैवंभूतोत्प्रेक्षा' इति **साहित्यविद्याधरी**। 'पद्महंसयोरविनाभावात् कयोश्चिद्दिव्य-पद्मयोस्तत्पदत्वमुत्प्रेक्ष्य दिव्य-हंसयोरेव हंसकत्वं चोत्प्रेक्षते।' इति **जीवातुः**। ३ 'अत्र समासोक्तिरलंकारः' इति **साहित्यविद्याधरी**।

ग्रावतुल्याः, अहं श्रीहर्षस्तु क्षारसमुद्रतुल्य इत्यर्थः । यथा क्षीरसागरो नीरार्थिनोऽपि तीरमात्रस्थान्क्षीरेण तर्पयति । लक्ष्मीकौस्तुभामृतादिभिः परमानन्ददायिभिः कृतार्थयति, ( तथा ) मदीयकाव्यविचारकस्यैव खेदच्छेदि प्रमोदनं वचनामृतमुत्पद्यते, नान्यकाव्यविचारकस्येति, अन्ये ग्रावतुल्याः, क्षीरोदतुल्यश्चाहमिति भावः ॥ १५१ ॥

इदानीं प्रसादरूपमुख्यगुणाभावादतिदुर्बोधत्वादकाव्यमिति ये वदन्ति, तच्छङ्कामपनुदन् बलदर्पदलनार्थं गुरुसंप्रदायेन विना दुर्बोधमित्यतिगाम्भीर्यप्रतिपादनार्थं च बुद्धिपूर्वमेव मयेदं काव्यं तत्र तत्र दुर्बोधं व्यरचीत्याह—

**ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया**
**प्राज्ञंमन्यमना हठेन पठिती मास्मिन्खलः खेलतु ।**
**श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-**
**त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः ॥ १५२ ॥**

**ग्रन्थेति** ॥ आत्मानं प्राज्ञं मन्यन्तं प्राज्ञंमन्यं मनो यस्यैवंविधोऽस्मिन्काव्ये हठेन स्वीयप्रज्ञाबलेन पठितमस्यास्तीति पठिती इदंकाव्यस्य पाठकः खलो मा खेलतु 'किमत्रास्ति, अश्रुतमेव व्याकर्तुं शक्यते' इत्यवज्ञापूर्वां दर्पाभिव्यक्तिं मा कार्षीदित्येवमर्थमिह काव्ये क्वचित्क्वचिदपि तत्र तत्र स्थले मया प्रयत्नाद्बुद्धिपूर्वं ग्रन्थग्रन्थिर्ग्रथ्यमानशब्दार्थकुटिलिका न्यासि विन्यस्ता खलमुखभङ्गार्थं बुद्धिपूर्वमेवेदं काव्यं मया दुर्बोधं व्यरचि, नतु प्रसन्नकाव्यकरणाशक्त्येत्यर्थः । 'क्वचित्क्वचिदपि' इत्यनेन तत्र तत्र प्रसन्नताप्यस्तीति न काव्यत्वहानिरिति सूच्यते । सज्जनस्य तु ग्रन्थविवेचनोपायमाह—**श्रद्धेति** । श्रद्धया गुरौ दैवतैकबुद्ध्या आराद्धेन पूजितेन गुरुणा पूर्वमश्लथा अपि श्लथाः कृता व्याख्यया सुबोधाः कृता दृढा स्वरूपतो दुर्बोधा ग्रन्थयो यस्मै स गुरुसंप्रदायावगतार्थः, अत एव दर्पराहित्यात्सज्जनः साधुरेतत्काव्यस्य रसोर्मिरमृतलहरी तस्यां मज्जनमवस्थानं समासादयतु प्राप्नोतु । गुरुपरम्परया विनैकस्यापि पद्यस्यार्थो बोद्धुं न शक्यते, तस्माद्गुरुपरम्पराया एवाध्येयमिदं काव्यमित्यर्थः । यश्चेदं गुरुपरम्पराया अधीते स सततं सुखी भवत्विति महाकविस्तस्मा आशिषं ददाति । अस्मिन्पठिती, 'क्तस्येन्विषयस्य—' ( वा० १४८५ ) इति कर्मणि सप्तमी । आराद्धेति राधेरनुदात्तत्वादिडभावः ॥ १५२ ॥

इदानीं पण्डितानन्दजननद्वारा स्वकृतेरभ्युदयमाशास्ते—

**ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरा-**
**द्यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम् ।**
**यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः**
**श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ॥१५३॥**

**ताम्बूलेति** ॥ यः कान्यकुब्जेश्वरात्सकाशात्सकलपण्डिताधिक्यव्यञ्जनं ताम्बूलद्वयं विद्वद्योग्यमासनं च लभते । न केवलं राजपूज्य एव, किंतु यः समाधिषु अष्टाङ्गयोगेषु ध्यानेषु वा विषये प्रमोदार्णवं परमानन्दस्वरूपं परं वागाद्यगोचरं ब्रह्म साक्षात्कुरुते । न परं पूर्वोक्तगुणविशिष्टो ब्रह्मविदेव, किंतु यदीयं काव्यं मधुवर्षि अतिसरसत्वादमृतवर्षि । न परं पूर्वविशेषणविशिष्टोऽतिसरसो महाकविरेव, किंतु

तर्कशास्त्रेष्वपि यस्योक्तयो धर्षिताः पराभूताः परे प्रतिवादिनो याभिस्तादृश्यः । तस्य विद्वच्चक्रचूडामणेः श्रीहर्षकवेरियं काव्यरचनारूपा कृतिः कृतिनां सुधियां मुदे आनन्दायाभ्युदीयात्, कृतिनामानन्दं कुर्वती सत्याकल्पमतिवृद्धिं प्राप्नुयादित्याशीः । सर्वत्र 'यत्'शब्दनिर्वाहो गुण एव । अभ्युदीयादिति, 'ई गतौ' इत्यस्य रूपम् ॥१५३॥

सन्तः सन्तु परप्रयोजनकृतः कल्पद्रुमन्तः सदा
स्वस्मिन्नेव पथि प्रवर्तनपराः सत्कीर्तयश्चापरे ।
अन्ये निस्पृहणाः श्रितश्रुतिपथा दीव्यन्तु भव्याशया
काकन्तः कलहप्रियाः खलजना जीयन्तु जीवन्तु वा ॥

वासनामस्य रामस्य किंकरस्य जगत्पते ! ।
नो चेत्पूरय, कल्पेशकल्पस्य तव किंकरः ॥

**इति श्रीबेदरकरोपनामकश्रीमन्नरसिंहपण्डितात्मजनारायणकृते नैषधीयप्रकाशे द्वाविंशः सर्गः समाप्तः ॥**

**समाप्तश्चायं ग्रन्थः ॥**

शुभम्



१ 'जै क्षये' इत्यस्य रूपम् ।

# NAISADHĪYACHARITA

**With the Commentary (Naiṣadhīyaprakās'a)**
**of Narāyaṇa**

and supplimented by extracts from the commentaries
of **Mallināth, Vidyādhar, Jinarāj etc.,**



EDITED BY

MAHĀMAHOPĀDHYĀYA PAṆḌIT S'IVADATTA,

HEAD PAṆḌIT AND SUPERINTENDENT OF THE SANSKRIT
DEPARTMENT, ORIENTAL COLLEGE, LAHORE

Eighth Edition

REVISED AND RE-EDITED WITH NOTES, INDICES ETC., BY

NĀRĀYAṆ RĀM ĀCHĀRYA "KĀVYATĪRTH"

PUBLISHED BY

SATYABHĀMĀBĀI PĀṆḌURANG,

FOR THE 'NIRṆAYA-SĀGAR' PRESS,

BOMBAY

1942

*Price 7 Rupees.*

श्रीहर्षविरचितं

# नैषधीयचरितम् ।

श्रीमन्नारायणविरचितया नैषधीयप्रकाशाख्यया व्याख्यया,

मल्लिनाथ-विद्याधर-जिनराजादिव्याख्यान्तरीय-

टिप्पण्यादिभिश्च समुल्लसितम् ।


पञ्चनददेशीयविश्वविद्यालयान्तर्गतसंस्कृतश्रेण्यध्यक्षप्रधानाध्यापक-

महामहोपाध्याय-दाधीचपण्डितशिवदत्तशर्मणा

पूर्वसंस्कृतस्यास्य



अष्टमं संस्करणम्



श्रीमदिन्दिराकान्तचरणान्तेवासिना

नारायण राम आचार्य "काव्यतीर्थ" इत्यनेन

परिशिष्टादिभिः समलंकृत्य संशोधितम् ।



मुंबय्याम्

सत्यभामाबाई पाण्डुरङ्ग इत्येताभिः,

निर्णयसागरमुद्रणयन्त्रालयकृते तत्रैव च संमुद्य प्राकाश्यं नीतम् ।

शाकः १८६४, सन १९४२.

# नैषधीयचरितस्थश्लोकानां मातृकावर्णक्रमेणानुक्रमणी ।

‡ मूले 'त्वया विधेयाः स गिरो' इति त्वनवधानतयान्यपठितः पाठो मुद्रितः, तत्र च 'त्वया विधेया न गिरो मदर्थाः' इति टीकाद्यनुगुणः पाठः पाठ्यः ।

इति नैषधीयचरितस्थश्लोकानुक्रमणी संपूर्णा ।